॥ श्रीः ॥

# अथ जैमिनीयसूत्राण्यारभ्यन्ते।

## श्रीगणेशाय नमः।

सृष्टिस्थित्यंतकर्त्रीहरिहरविधिभिःसेवितानंददात्रीनानातंत्रोक्तमार्गैर्मुनिभिरपिधियाभालचंद्रोज्ज्वलांगी। आरक्ताभत्रिनेत्राशिवशवनिलयाराजराजेश्वरीसाम्नाचंनोद्यातनोतुप्रतिपदकठिनेजैमिनेःसूत्रसंघे ॥ १ ॥

विवस्वद्वंशाम्यावनिपतिवरश्रीरणजितोदयांभोधेर्वाचातवकरुणयाजैमिनिमुनेः।निरालंबेशास्त्रेजननिगिरिजेयास्यतिनकिंसुटीकामेकामोहृदिसमभिपूर्तिरचयितुम् ॥ २ ॥

## उपदेशं व्याख्यास्यामः ॥ १ ॥

अथप्राक्तनकर्मज्ञानानुष्ठेयकाशीवासादिनाजगदुद्धारंचिकीर्षुः करुणासिंधुर्जैमिनिमुनिः प्रारिप्सितग्रंथप्रतिबंधकोपशमनायश्रीशंकरप्रणतिपूर्वकं सकललोकशुभाशुभसूचकजातकशास्त्रमनुष्ठातुंप्रतिजानीते। उचतत्पदमुपदंतस्येशःशंकरस्तंव्याख्यास्यामःनमस्कुर्मः"उकारःशंकरःप्रोक्त"इत्येकाक्षरकोशः।प्रकृतार्थस्तुउपदिश्यतेप्रकाश्यतेप्राक्तनशुभाशुभकर्मानेनेत्युपदेशोजातकशास्त्रविशेषस्तंव्याख्यास्यामःकथयिष्यामइति ॥१॥

## अभिपश्यन्त्यृक्षाणि ॥ २ ॥ पार्श्वभे च ॥ ३ ॥

नन्वस्मिन्शास्त्रेकिमन्यशास्त्रतोदृष्टिर्विलक्षणोतान्यशास्त्रप्रसिद्धैवेतिसंशयंपरिहरन्नाह। ऋक्षाणिराशयःअभिसम्मुखंपार्श्वभेपार्श्वराशींचपश्यंतिअवलोकयंति क्रमतश्चरेऽष्टमपंचमैकादशराशयः स्थिरेषष्ठतृतीयनवमराशयः द्विःस्वभावेसप्तमचतुर्दशमराशयस्तथाभवन्तीतिदृष्टिच

केंद्रद्रष्टव्यम् वृद्धकारिकाच "चरंधनंविनास्थास्तुस्थिरमंत्यंविनाचरम् । युग्मंस्वेनविनायुग्मंपश्यतीत्ययमागमः" इति तदर्थसंग्रहः " चरानाग ८ बाणे ५ श ११ राशीन्स्वतोवैस्थिराःषट् ६ तृतीयां ३ क ९ राशी न्क्रमेण । स्वतः शैलभं ७ वेद ४ भंपंक्ति १० भंचक्रमाद्विःस्वभावः प्रपश्यंतिपूर्णमि"तिराशिपुसिद्धं ॥ २ ॥ ३ ॥

## तन्निष्ठाश्चतद्वत् ॥ ४ ॥

द्रष्टृदृश्यभावंखेटेष्वतिदिशति।तन्निष्ठाःराशिस्थिताग्रहास्तद्वत्तैराशिभिं स्तुल्यं यथाभवतितथास्वस्थितराशिवदेवस्वतोष्टमादिराशींस्तन्निष्ठग्रहां श्चपश्यंतीत्यर्थः। तथाचोक्तंवृद्धैः "चरस्थंस्थिरगःपश्येत्स्थिरस्थंचरराशिगः । उभयस्थंतूभयगोनिकटस्थंविनाग्रहम्" ॥ ४ ॥

## दार ४ भाग्य २ शूल ११ स्थार्गला निध्यातुः ॥ ५ ॥

"शुभार्गलेधनसमृद्धि" रित्यादिसूत्रेष्वर्गलपदसंकेतस्याकांक्षांनिवर्तय न्नाह।विचाराश्रयीभूतस्यराशेर्निध्यातुर्द्रष्टुर्ग्रहाद्दारभाग्यशूलस्थाःदारादि पदबोध्यचतुर्थद्वितीयैकादशस्थानस्थिताग्रहाविचाराश्रयीभूतराशिद्रष्टु- र्ग्रहस्यअर्गलाः अर्गलासंज्ञकाःस्युः।अर्गलाकर्तारइतियावत्।ननुस्वाम्या दिभिर्निध्यातुःफलदातुरित्युक्तं त्वयाऽयमर्थःकथंज्ञातइतिचेच्छृणु'भय२ पुण्य११विना ४ भावाद्रष्टुराहुःशुभार्गलमि"तिवृद्धवाक्यादेवशुभार्गलम र्गलाविप्रतिबंधकत्वमितिछंदोवत्सूत्राणीत्युक्तेः।संधिश्छांदसः।अत्राक्षरै र्देवराशिभात्म्योरुक्तसुरेरभिप्रेतमित्यनुपदमेवस्फुटीभविष्यति।अस्मिन्श्र येकटपयादिक्रमेणांकाग्राह्याः।तत्रपिंडदशाधिकसंख्यासन्निपातेद्वादश तष्टंकृत्वाऽवशिष्टसंख्याराशिभावबोधिका।अत्रप्राच्यकारिकाच "कटपय वर्गभवैरिहपिंडांत्यैरक्षरैरंकाः।नञिचशून्यंज्ञेयंतथास्वरेकेवलेकथितं" य थादारेत्यत्रांकानांवामतोगतिरितिरीत्यादकारस्याष्टसंख्यारकारस्याद्वि संख्येत्यष्टाविंशतिसंख्यामापन्नेपुंजेद्वादशतष्टेचोर्वरिताःचतुःसंख्याभाव बोधिकेति ॥ ५ ॥

## कामस्थातुभूयसापापानाम् ॥ ६ ॥

इयमर्गलाशुभपापोभयसाधारणीनचोक्तार्गलाप्रतिबंधकमादौवक्तव्यमितिवाच्यं तथासत्यर्गलापदस्यमंडूकप्लुत्यानुवृत्तेरस्वारस्यादर्गलांतरमेवाह रविक्षीणचंद्रभौमशनिराहुकेतुपापयुतबुधानांभूयसाबाहुल्येनपापानामितिबहुवचननिर्देशात्रिप्रभृतिभिः पापैःकामस्थाद्तृतीयस्थानस्थाऽर्गलाभवतिएकेनपापेनद्वाभ्यांचनेत्यर्थः। इयमर्गलापापसंबंधिनी। पूर्वातुशुभपापसाधारणी । प्रेमानिधिपंडितैस्तुपापानांमध्येयोधिकांशकस्तेनतृतीयेर्गलाभवतीति यदुक्तंतत्सूत्राक्षरार्थान्नायातिपापानांभूयसेत्यनेनपापबाहुल्यस्यैवायातीति बहुपापकृतकामस्थार्गलायानिर्बाधकत्वादेवपृथक्सूत्रमिदम् ॥ ६ ॥

## रिःफनीचकामस्थाविरोधिनः ॥ ७ ॥

पूर्वार्गलाबाधकान्याह दारेत्यादिपदबोध्यचतुर्थद्वितीयैकादशस्थानस्थितानामर्गलाकर्तॄणांखेटानांक्रमेणरिःफादिपदबोध्यदशमद्वादशतृतीयस्थानस्थिताग्रहाविरोधिनः अर्गलाप्रतिबंधकाइत्यर्थः।तथाचदशमादिस्थानेषुग्रहाभावेसत्येवचतुर्थादिस्थानस्थैः ग्रहैः अर्गलाभवतिनान्यथेतिभावः ॥ ७ ॥

## नन्यूनाविबलाश्च ॥ ८ ॥

बाधकबाधकानप्याह । अर्गलाकर्तृग्रहेभ्यःप्रतिबंधकाग्रहान्यूनाअल्पसंख्याकाः द्वौचेदर्गलाकर्तारावेकश्चेत्प्रतिबंधकइत्यादिविबलानिर्बलाश्चयदितदाप्रतिबंधकानस्युः।बलमग्रेनिरूपयिष्यति अर्गलास्तत्प्रतिबंधकाश्चवृद्धैरुक्ताः"भय२पुण्य ११ विनाध४भावाद्गुरुराहुःशुभार्गलम्।स्फु १२टांग ३ व्यय १० भावास्तुविपरीतार्गलंविदुः ॥"द्रष्टृदृष्टग्रहस्याद्वितीयादिनःशुभार्गलंप्राहुः अर्गलविरोध्यर्गलमेवविपरीतार्गलमित्युच्यते ॥ ८ ॥

## प्राग्वत्रिकोणे ॥ ९ ॥

तृतीयार्गलामुपदिशति।त्रिकोणेपंचमनवमयोः अर्गलातत्प्रतिबंधकश्चप्राग्वत्पंचमेग्रहसत्त्वेऽर्गलानवमेन्यूनसंख्यात्वनिर्बलत्वदोषरहितग्रह

सत्त्वेऽर्गलाप्रतिबंधकत्वमिति ।नचदारेरत्यादिसूत्रेशांतपदस्यरिष्फेत्यादि सूत्रेघातुपदस्योपादानादेवार्थलाभेसूत्रांतरनिर्माणस्यवैयर्थ्यापत्तिरिति वाच्यं 'विपरीतंकेतोरि'तिसूत्रेकेतुकृतव्यत्ययस्यत्रिकोणाएववक्तव्यत्व। स्साफल्यप्रसंगात् । अन्यथाहिदारभाग्यशूलेष्वपिकेतुकृतव्यत्ययापत्ति रितिभावः ।यत्तुकैश्चिदुक्तंप्राग्वदितिसूत्रस्यपृथक्करणसामर्थ्यादप्रतिबंधे यमर्गलेतितत्रतथासतिकामस्येतिसूत्रोत्तरमेवप्रसंगात्तन्निर्मितिःस्यादि तिविपरीतंकेतोरितिसार्वत्रिकंयदुक्तंतदपिन ।कामस्येतिसूत्रोत्तरंप्राग्वदि तिसूत्रंचेत्तदासार्वत्रिकंस्यात्प्राग्वदितिसूत्रानंतरप्रणयनात्तत्रैवास्यप्रवृ त्तिरित्यर्थः।विपरीतामितिसूत्रस्योत्तरसूत्रेऽन्वयइतियदुक्तंतदपिन अष्टा नांवेतिपृथक्करणसामर्थ्यादेवराहोर्न्यूनांशत्वेनकारकत्वलाभादेतदन्वय स्यवैयर्थ्यापत्तिः अष्टानांवेत्यन्यमतंयदुक्तंतत्रप्रमाणाभावइति ॥ ९ ॥

## विपरीतंकेतोः ॥ १० ॥

केतौविशेषमाह । केतोर्ग्रहस्यनवममर्गलास्थानंपंचमंप्रतिबंधक स्थानम् ॥ १० ॥

## आत्माधिकःकलादिभिर्नभोगःसप्तानामष्टानांवा॥११॥

किंचसतिमुनेस्तात्पर्येकेतोर्ग्रहस्यअस्मिन्ग्रंथेविशेषतः कारकाफलादे शेकर्तव्येकारकान्विवक्षुरादावात्मकारकंदर्शयतिरव्यादिशन्यंतानांसप्ता नांराह्वंतानामष्टानांवामध्येयोनभोगोग्रहःकलादिभिः कलायाआदयोंशा स्तैरंशैः अंशादिभिरितियावत् आधिकःसआत्माआत्मकारकइत्यर्थः।अंश पदंविहायकलादिपदेननिर्देशस्त्वंशसाम्येपिकलादिकाधिक्येनविनिर्णेत व्यमितिज्ञापनार्थंकलादिभिरपिसाम्येवक्ष्यमाणबलेनैकतरनिर्णयः। तत्र द्वित्र्यादिग्रहाणामंशादिसाम्येनकारकलोपेबलवान्स्थिरकारकादेवतत्त त्कारकविचारःकर्तव्यइति । ननुआत्माधिकःकलादिभिर्नभोगोष्टानांमि त्येवपाठोऽस्तुलाघवात् । उच्यते । तत्राधिकपदस्यानिविष्टत्वाद्राहोस्तुस र्वेग्रहांशन्यूनांशतयात्मकारकतेतिसूचनायाष्टानांवेतिपृथगुक्तिः। ननुकथं

ज्ञातमितिचेत् राहोर्विपरीतसंचारान्न्यूनत्वेनाधिक्यात् नभोगेष्टानामि तिपाठेत्वन्यग्रहरीत्याराहोरप्याधिक्यंप्रतीयेतद्वित्राणांग्रहाणांब्रह्मत्वयो गेप्रसक्तेराहुयोगेविपरीतमितिसूत्रेणराहोर्योगेनापिन्यूनांशस्यब्रह्मत्वं स्प स्पतुसुतरामिवाल्पांशत्वेनकारकत्वंभवतीत्यर्थः। अत्रवृद्धसंमतिः"भागा धिकःकारकःस्यादल्पभागोंत्यकारकः मध्यांशोमध्यखेटःस्यादुपखेटःसए वहि"ति नचवृद्धवाक्याद्राहोर्न्यूनांशकत्वेनात्मकारकत्वंनायातीतिवाच्यं शास्त्रप्रसिद्धतयाबालानामपितथैवबोधाद्विविच्यनोक्तम् अत्रवृद्धवाक्यां तरंच" मेषाद्यसव्यमार्गेणराहुकेतूनकारकौ"अस्यार्थः राहुकेतूमेषाद्यस व्यमार्गेणसव्यंवामंअसव्यंदक्षिणंतुअसव्यमार्गेणमेषादिक्रममार्गेणकार कौनविपरीतमार्गेणतुभवतएवेतिफलितार्थः। अत्रराशिकृतमाधिक्यंनग्रा ह्यमितिसंप्रदायः। अथवाअंशादिभिर्ग्रहद्वयसाम्येसत्तमकारकाभावेराहुर पिग्राह्यःतस्मादष्टानांवेतिगौणः कल्पोनिरुक्तः यत्तुप्रेमनिधिपंथैर्विपरी तंकेतोरितिसूत्रंदेहलीदीपकन्यायेनात्रान्वेतीत्युक्तंतदयुक्तं रव्यादिक्रम मनादृत्यादौकेतुनिरूपणस्यायोग्यत्वात् राहोरंशाधिक्येनकारकताके तोस्तुन्यूनांशत्वेनकारकतेतिबाधितत्वाच्च राहोरधिकांशत्वेसतिकेतोरपि तथात्वात् नवानामितितुकथंनोक्तमितिचेत् राहुकेत्वोरंशादिसाम्येनका रकांतराभावादष्टानामित्येवोचितमित्यलमतिविस्तरेण ॥ ११ ॥

## सईष्टेबंधमोक्षयोः ॥ १२ ॥

आत्मकारकस्योत्कर्षंदर्शयति। सआत्मकारकोबंधमोक्षयोरीष्टेस्वामी भवति नीचराशिपापयोगोच्चादिराशिशुभयोगैरितिशेषः। नीचपापयुक्तः कारकः स्वदशांतर्दशासुबंधनादिदुःखदःस्यात् उच्चादिशुभयुतस्तुग्र हांतरबलेनबद्धस्यापिमोक्षणकर्ताभवति यद्वाअतिकूलकःआत्मकारकः पापकर्मप्रवृत्तिद्वारासंसाररूपबंधनदःस्यात् अनुकूलस्तुज्ञानकाशीवासा दिभिर्मोक्षकर्तास्यादित्यर्थः ॥ १२ ॥

## तस्यानुसरणादमात्यः ॥ १३ ॥

अमात्यकारकमाह।तस्यात्मकारकस्यअनुपश्चात्सरणाद्गमनान्न्यूनां शतयाऽमात्यः अमात्यकारकोभवतीति ॥ १३ ॥

## तस्यभ्राता ॥ १४ ॥

भ्रातृकारकमाह । तस्यामात्यकारकस्यानुसरणादल्पांशतयाभ्रातृकारकःस्यात् ॥ १४ ॥

## तस्यमाता ॥ १५ ॥

मातृकारकमाह । मातृकारकादल्पांशोग्रहोमातृकारकोभवति ॥ १५ ॥

## तस्यपुत्रः ॥ १६ ॥

पुत्रकारकमाह । मातृकारकान्न्यूनांशःपुत्रकारकइति ॥ १६ ॥

## तस्यज्ञातिः ॥ १७ ॥

ज्ञातिकारकमाह । पुत्रकारकादल्पांशोज्ञातिकारकइति ॥ १७ ॥

## तस्यदाराश्च ॥ १८ ॥

दारकारकमाह । ज्ञातिकारकान्न्यूनांशःस्त्रीकारकः।तस्यदाराइत्यनेनैव सिद्धेचकारोनुक्तसमुच्चयार्थःसमस्थिरकारकपदोपपदादिभ्योपिस्त्रीविचारःकार्य्योनतुदारकारकादेवेतिसूचयति ॥ १८ ॥

## मात्रासहपुत्रमेकेसमामनंति ॥ १९ ॥

पुत्रकारकविकल्पमाह । मातृकारकात्पुत्रकारकविचारः कार्यइतिकेच नाचार्याविदंतिकारकद्वयैक्यंवदंतीतियावत् ॥ १९ ॥

## भगिन्याऽऽरतःश्यालःकनीयाञ्जननीचेति ॥ २० ॥

अथनित्यकारकान्वक्तुमुपक्रमते तत्रादौभगिन्यादिकारकान्दर्शयति। आरतोभौमाद्भगिनीसामान्येंश्यालः स्त्रीभ्राताकनीयान्कनिष्ठभ्राताजननीमाताएतेविचारणीयाइत्यर्थः ॥ २० ॥

## मातुलादयोबंधवोमातृसजातीयाइत्युत्तरः ॥ २१ ॥

मातुलादिकारकमाह । उत्तरतोभौमाग्रिमाद्बुधात् मातुलभ्रातृभगिन्यादयोबंधवोमातृसजातीयामातृसपत्न्यश्चविचारणीयाः ॥ २१ ॥

## पितामहःपतिपुत्राविति गुरुमुखादेवजानीयात् ॥२२॥

पितामहादिकारकमाह । गुरुमुखादेवगुर्वादिभ्यएवक्रमेणपितामहप तिपुत्राइतिजानीयाद्विचार्याइत्यर्थः । नचैवंचेदग्रिमसूत्रेपत्नीपातिःपितरा वितिवाच्यं मंदात्पुत्रइतितृतीयसूत्रोपादानापेक्षयातथैवसुवचत्वात् उर्व रितंत्वाग्रिमसूत्रेनिबद्धम्अन्यथामुखपदंव्यर्थमेवस्यादिति ॥ २२ ॥

## पत्नीपितरौश्वशुरौमातामहाइत्यंतेवासिनः॥२३॥

पत्न्यादिपुशुक्रकारकमाह । अंतेवासिनःगुर्वग्रेपठिताच्छुक्रात् भार्या मातृपितृश्वशुरश्वश्रूमातामहाविचार्याइत्यर्थः ॥ २३ ॥

## मंदोऽज्यायान्ग्रहेषु ॥ २४ ॥

ननुकारकत्वेनद्वित्रादिग्रहसन्निपातेकमालंव्यविचारइतिसंदेहेकला धिक्यवतस्तत्रापिसाम्येनिसर्गबलवतःकार्यइतिरीतिस्ततस्माद्ग्रहाणांनि सर्गबलंसूचयति । मंदःशनिःसत्सुग्रहेष्वज्यायान्दुर्बलः तथाचबृहज्जा तके"शकुजबुधगुरुशुचरायावृद्धितोवीर्यवंतः"इतितयाचनिसर्गबलेशन्यादय उत्तरोत्तरंबलिनइत्यर्थः ॥ २४ ॥

## प्राचीवृत्तिर्विषमभेषु ॥ २५ ॥

अथचरदशावर्षानयनोपयोगितयौजयुग्मराशिभेदेनगणनामुपदिश ति विषमभेषुमेषमिथुनादिराशिषुप्राचीवृत्तिः क्रमगणनास्यात् मेषवृ- षादिरीत्यागणनास्यादितियावत् ॥ २५ ॥

## परावृत्त्योत्तरेषु ॥ २६ ॥

उत्तरेषुसमराशिषुवृषकर्कादिषुपरावृत्त्याव्युत्क्रमेणवृषमेषमीनादि- क्रमेणगणनाभवतीत्यर्थः ॥ २६ ॥

## नक्वचित् ॥ २७ ॥

अत्रापवादमाह ।ओजराशिषुक्वचिन्नक्रमःयुग्मराशिषुक्वचिद्व्युत्क्रमोने त्यर्थः।कुत्रेत्याकांक्षायांपरंपराश्रुतार्थेनचिरंतनैरुक्तं"क्रमाद्वृषेवृश्चिकेच

व्युत्क्रमात्कुंभसिंहयोरि"तिसूत्रत्रयफलितार्थसंग्रहस्त्वयंमेषादित्रित्रिभे ज्ञेयं पदमोजपदक्रमात् दशाब्दानयनेकार्यागणनाव्युत्क्रमात्समेप्राची वृत्तिर्विषमपदेपरावृत्योत्तरेइतिकथंनोक्तमितिचेत् यावदीशाश्रयंपदमृ क्षाणामितिवक्तव्यत्वात्संदेहभियानोक्तं तथाच "मातृधर्मयोः समान्यं विपरीतमोजकूटयोरि"तिवक्तव्यत्वाच्चेति ॥ २७ ॥

## नाथांताःसमाःप्रायेण ॥ २८ ॥

अथतत्तद्राशेर्दशाब्दानयनायावधिंदर्शयाति । अत्रराशीनांनाथाग्रंथां तरोक्ताग्राह्याः अत्रानुक्तत्वात् तथाहि "क्षितिजसितज्ञचंद्ररविसौम्य सितावनिजाः । सुरगुरुमंदसौरिगुरवश्चग्रहांशकपाः"इति नाथानामव स्थाननैयत्येनचरदशोच्यते । कुत्रचरदशापदेनव्यवहारइतिचेत् जगत्त स्थुषोरर्द्धयोगार्द्धेइत्यादौगृहाणअत्रसमाः अब्दानाथांताःतत्तद्राशीनां तत्तद्राशिनाथाश्रितराशिपर्यंताग्राह्याः इतिएवंचनाथेद्वितीयेएकाब्दस्तृ तीयेद्वौइतिक्रमेणद्वादशेनाथेएकादशाब्दाः तत्तद्राशौनाथेस्थितेसातितु द्वादशाब्दाइतिविवेकःतदुक्तंप्राच्यैः "तस्मात्तदीशपर्यंतंसंख्यामत्रदशां विदुः । वर्षद्वादशकंतत्रनचेदेकांविनिर्दिशेत्" अस्यार्थः तत्तद्राशौनाथे स्थितेसातिद्वादशवर्षाणिअसातितुएकाब्दोग्राह्यइति अतएवप्रायेणेतिपदे ननाथांताःसमाइत्यस्यापवादःसूचितः।प्रायेणेत्यनेनैवस्वामिनउच्चत्वनी चत्वाभ्यामेकैकवर्षवृद्धिर्ह्रासावपिसूचितावेववृश्चिककुंभयोर्द्विनाथत्वम पिसूचितमेव/। तदुक्तंवृद्धैः "उच्चखेटस्यसद्भावेवर्षमेकंविनिक्षिपेत् । तथै वनीचखेटस्यवर्षमेकंविशोधयेदि"ति अत्रवृश्चिककुंभयोर्विशेषोवृद्धैरुक्तः "कुजसौरीकेतुराहूराजानावलिकुंभयोः । कुजसौरीकेतुराहूयुक्तौतत्र स्थितौयादि ॥ वर्षद्वादशकंतत्रनचेदेकंविनिर्दिशेत्" अयमर्थःवृश्चिकस्य कुजकेतूराजानौनतुतयोरेकैकमपिकुंभस्यशनिराहूराजानौनत्वेकैकमपि तयाचद्वयोःसत्त्वेएववर्षद्वादशकम् एकैकसत्त्वेस्वाम्यभावइवोक्तप्रकारे णदशाब्दगणनंकार्यमितिअन्यराशौतदुभयसत्त्वेनाथांताइतिरीतिरनुस र्तव्यातयोर्भिन्नभिन्नराशिगत्वेयएवनाथोवलवांस्तत्संख्याग्राह्याएतदुक्तं वृद्धैः "द्विनाथक्षेत्रयोरत्रनिर्णयःकथ्यतेधुना । एकःस्वक्षेत्रगोन्यस्तुपर

त्रयदिसंस्थितः॥तदान्यत्रस्थितंनाथंपरिगृह्यदशांनयेत्।स्वक्षेत्रेमिलिता वेवस्वामिनस्त्वेकशस्तथा ॥ एकस्यस्वगृहस्थत्वंनहिकार्यौपयोगिकम्। द्वावप्यन्यर्क्षगौतौचेत्सग्रहोबलवान्भवेत् । ग्रहयोगसमानत्वेचिंत्यंराशि बलाद्बलम् । चरस्थिरद्विस्वभावाःक्रमात्स्युर्बलशालिनः । राशिसत्त्व समानत्वेबहुवर्षोबलीभवेत् ॥ एकःस्वोच्चगतस्त्वन्यःपरत्रयदिसंस्थि तः । ग्राहयेदुच्चखेटस्थंराशिमन्यंविहायवै ॥ नाथांताइतिरीत्यायोबहुवर्ष वर्तीदशाम् । करोतिबहुवर्षोसौस्वराशेर्दूरगःखगः ॥ एवंसर्वंसमालोच्य जालस्यानिधनंवदेदिं"तिस्पष्टार्थःश्लोकाः । एकःस्वोच्चेत्यस्यार्थः । यदि तुबहुवर्षदएकोराजापरक्षेत्रगः अपरस्तुराजाऽन्यक्षेत्रगएवोच्चगोल्पवर्ष दस्तदाबहुवर्षदंत्यक्त्वाऽल्पवर्षदमेवोच्चग्रहमाश्रित्यनाथांताइति रीत्या ऽब्दानयनंकार्यमिति । अन्यच्चवृद्धैरुक्तं "न्यासयोर्ग्रहहीनत्वेवैक स्यान्येनसंयुतौ ॥ ग्राह्याराशिर्ग्रहाभावस्तत्स्वाम्युच्चगतोयदि ॥ एकत्रस्वर्क्षगः खेटश्चान्यत्रद्वौग्रहौयदि ॥ ग्रहद्वययुतिंहित्वाग्राहये त्पूर्वंभंसुधीरि"ति । अयमर्थः । न्यासयोःलग्नसप्तमयोर्द्वयोःस्थान योःग्रहाभावेअथवाद्वयोर्मध्येएकस्यान्येनकेनचिद्ग्रहेणस्वेशातिरिक्तेन युतौसत्यांचतत्रयोराशिर्न्यायेननिर्बलःसराशिस्तद्राशीशेउच्चंगतेसतिब लवानेवनापरःसग्रहोपिएकत्रराशौस्वक्षेत्रगोग्रहः अपरत्रद्वौग्रहौस्वस्त दासस्वामिकराशिरेवबलवानितिद्वितीयपद्यतात्पर्यं । उच्चराशेस्तु"अ जवृषभमृगांगनाकुलीराझषवणिजौचादिवाकरादितुंगाः ॥ दशशिखि मनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चतेऽस्तनीचाः" इतिपंचमेपद क्रमारभाष्मत्यक्त्वमितिवक्ष्यमाणसूत्रात्क्रमभेदेनदशालेख्याआरंभाव धिस्तुलग्नमेवचरदशायामत्रशुभःकेतुरितिसूत्रादस्यादशायाश्चरदशेति नामबोध्यम् ॥ २८ ॥

## यावदीशाश्रयंपदमृक्षाणाम् ॥ २९ ॥

अथाग्रेफलविशेषज्ञापनायराशीनामारूढापरपर्यायंपदमुपादिशति। ऋक्षा णांराशीनामीशाश्रयंयावत्ईशाश्रयंराशिपर्यंतंयासंख्यातामीशाश्रयाद ग्रेगणीयतत्संख्यायस्मिन्राशौसमाप्तातद्राशीस्तद्ग्रहस्वामिकराशेः पदं

स्यादित्यर्थः।ननुईशाश्रयादप्रेमणीयेत्यर्थः।कथमुच्यतेयावञ्चासावीशश्च यावदीशः।यावदीशःआश्रयोयस्यतद्यावदीशाश्रयंपदामितिसमासाछुन्न इतितदेववृद्धैरुक्तं "लग्नाद्यावतियेतिष्ठेद्राशौलग्नेश्वरःक्रमात् । ततस्ताव तिथंराशिंजन्मारूढंप्रचक्षते ॥ लग्नाल्लग्नपतिर्यावद्राशिसंस्यस्ततःपुनः । तावानृपिभिरारूढःकथितःसर्वशास्त्रतः ॥ यदालग्नाधिपोलग्नेसप्तमेवा स्थितोयदि ॥ आरूढंलग्नमेवात्रनिर्दिशेत्कालवित्तमः" इदंचश्लोकेन लग्नपदंनिरुक्तं पदांतराणामप्युपलक्षणंबोध्यं श्लोकाःस्पष्टार्थाः ॥२९॥

## स्वस्थेदाराः ॥ ३० ॥

अथारूढोदाहरणरूपंसूत्रद्वयमाह।लग्नात्स्वस्थेचतुर्थस्थेलग्नस्वामिनि दाराः सप्तमस्योराशिर्लग्नारूढंभवति ॥ ३० ॥

## सुतस्थेजन्म ॥ ३१ ॥

लग्नात्सुतस्थेसप्तमस्थेलग्नस्वामिनिजन्मलग्नमारूढंभवतीत्यर्थः।याव दीशेतिसूत्रेणैवसिद्धे एतत्सूत्रद्वयमुदाहरणद्वारास्पष्टार्थंपठितमिति।यत्तु आद्यैःस्वस्थेदाराविचारणीयाः सुतस्थेभ्रातृजन्मविचार्यमित्युक्तंतदसंग तमेवप्रतिभातीति ॥ ३१ ॥

## सर्वत्रसवर्णाभावाराशयश्च ॥ ३२ ॥

अथात्रभावराशिबोधकपदानामन्यशास्त्रतोवैलक्षण्यमाशंक्याह।भावा राशयश्चसवर्णाः वर्णैनसहिताः सवर्णाः एकादिसंख्याबोधकाक्षरगम्याः सर्वत्रग्रंथे।ननुसिद्धमन्यदितिवक्ष्यमाणत्वात् शिवतांडवादिग्रंथेपुकटपया दिवर्णैःसूचितसंख्याप्रसिद्धेर्वाकिमर्थमिदंसूत्रमिति। नचभावराशिग्रहसा- धारण्येनबोधःस्यादितिवाच्यं।भावराशीनांसंख्याप्राधान्यत्वाद्ग्रहाणांतु ग्रहवाचकपदप्राधान्यत्वात्साधारण्येनबोधोनस्यात्किमर्थंसर्वत्रेतिसूत्रमि त्याशंक्यवर्णपदंराशिपरमेतादितिप्रकारांतरेणैतत्सूत्रंव्याख्यायते। सर्वत्र सवर्णाभावाराशयश्चभावाराशयश्चसवर्णाः वर्णेनवर्णदेनसहिताःसवर्णाभ वंतिवर्णदापनप्रकारस्तिवत्यंवृद्धैरुक्तः"ओजलग्नप्रसूतानांमेषादेर्गणयेत्क्र

मात्।युग्मलग्नप्रसूतानांमीनादेरपसव्यतः।मेषमीनादितोजन्मलग्नांतंग णयेत्सुधीः।तथैवहोरालग्नांतंगणयित्वाततःपरं॥पुंस्त्वेनस्त्रीतयावैतेसजा तीयेऽभेयदि॥तर्हिसंख्येयोजयीतवैजात्येतुवियोजयेत्॥मेषमीनादितः पश्चाद्योराशिः सतुवर्णदः" ओजयुग्मलग्नानुरोधेनयोजनशोधनोत्तरं द्वादशाधिकेरवि १२ तष्टंकृत्वायास्त्यितंतन्मेषमीनादिक्रमव्युत्क्रमगण नयायोराशिर्लभ्येतसवर्णदराशिरितिबोध्यं "होरालग्नभयोर्नेया दुर्बल द्वर्णदादशा।यत्संख्योवर्णदोलग्नात्तत्तत्संख्याक्रमेणतु॥क्रमव्युत्क्रमभेदे नदशास्यात्पुरुषास्त्रियोः" लग्नाद्यसंख्याकोवर्णदराशिस्तत्तत्संख्याक्रम तःओजयुग्मलग्नानुरोधेनप्रथमप्रवृत्तक्रमव्युत्क्रममर्यादयातत्तद्राशीनां दशास्यादिति यथानाथांताइतिसूत्रेस्वस्वराशेर्नाथांतंवर्षाण्यानीतानि तथात्रलग्नादेवस्ववर्णदपर्यंतंवर्षाण्यानेयानीतिमेषमीनादितः पूर्वोक्त रीत्याधनभावादितत्तद्भावांतगणनांविधायपूर्ववत्करणे तत्तद्भाववर्ण ददशाराशयोभवंतीतिसर्वत्रेतिपदेनसूचितंनचवर्णदानयनं वर्णददशान यनंचसूत्रार्थान्नयातीतिवाच्यं सिद्धमन्यदितिसूत्रादन्यविंशास्त्रप्रसिद्ध त्वादत्रनोक्तंप्राचीनैःसंगृहीतमिति।गुलिकोपितथैवयथावर्णदोराशिर्ग्रौ जत्वभेदेनमेषमीनादिगणनयाजन्मलग्नहोरालग्नपर्यंतसंख्यावशतः स मानीतस्तथैव भावलग्नमेवजन्मलग्नंविभाव्यभाववर्णदराशिरानेयइति। भावलग्नानयनंवृद्धैरुक्तं "सूर्योदयंसमारभ्यघटिकानांतुपंचकं॥ प्रयातिजन्मपर्यंतंभावलग्नंतथैवच॥ तथासार्द्धद्विघटिकामितात्काला द्विलग्नभात्॥प्रयातिलग्नंतन्नामहोरालग्नंप्रचक्षते" इतिस्पष्टार्थौश्लोकौ। होरालग्नस्पष्टीकरणंतुसार्द्धद्वयघट्याचेत्त्रिंशदंशालभ्यंते तर्हिइष्टघटचा किमितित्रैराशिकेनज्ञेयंभावलग्नंहोरालग्नंचजन्मलग्नाद्गणनीयमिति। हो रालग्नानयने जन्मलग्नेविषमेसतिसूर्यराशितोजन्मलग्नेसमेसतितुजन्म लग्नाद्गणयेत् सूर्योदयमारभ्ययावत्योहोराइष्टकालपर्यंतंजातास्ताःसूर्या ल्लग्नाद्वापरिगणनयांतिमंहोरालग्नंज्ञेयमितिप्राचीनाकारिकातोयमर्थो ना यातीतिवर्णदराशितःफलमुक्तंवृद्धैः "पापदृष्टिः पापयोगोवर्णदस्यत्रिको णके॥यदिस्यात्तर्हितद्राशिपर्यंतंतस्यजीवनं॥ रुद्रशूलेनतथैवायुर्मरणादि

निरूप्यते ॥ तथैववर्णदस्यापित्रिकोणेपापसंगमे॥ वर्णदात्सप्तमाद्राशेः कलत्रादिविचिंतयेत् ॥ एकादशाद्यजंतुतृतीयात्तुयवीयसम् ॥ पंचमे तनुजंविद्यान्मातरंतुर्यपंचमाम् ॥ पितुस्तुनवमान्मातुःपंचमाद्वर्णद स्यतु ॥ शूलराशिदशायांवैप्रबलायामरिष्टकं" वर्णदराशेःपंचमा त्प्रबलशूलदशायांमातुररिष्टंवर्णदराशिनवमात्प्रबलशूलदशायांपितुररि ष्टंजानीयादित्यर्थः ॥ ३२ ॥

## नग्रहाः ॥ ३३ ॥

अत्रापवादमाह।प्रथमपक्षेभावाराशयश्चसवर्णाःसंख्याबोधकाक्षरगम्याइ त्युक्तंग्रहास्तुनप्रसिद्धपदगम्याएवेत्यर्थः द्वितीयपक्षेभावाराशयश्चसवर्णाः वर्णदराशिसहिताइत्युक्तंग्रहास्तुवर्णदसहितान तथाचभावराशिवर्णदाभवं तिनग्रहाणामित्यर्थः ॥ ३३ ॥

## यावद्विवेकमावृत्तिर्भानाम् ॥ ३४ ॥

अथांतर्दशाविभागंदर्शयति।भानांराशीनांप्रतिराशियेदशाब्दाश्चरस्थि रादिदशासुसिद्धास्तेषां द्वादशविभागेनद्वादशराशीनामावृत्तिर्भवति । एवंचद्वादशराशीनां विवेकपदबोध्यचतुश्चत्वारिंशदधिकशतसंख्याभव तीति।तदुक्तमाचार्यैः"कृत्वार्कधाराशिदशांराशेर्भुक्तिक्रमाद्वदेत्"एवंदशां तर्दशादिकृत्वातेनफलंवदेदिति । यत्तुउपास्थिततयादशारंभावधिःस्वस्व लग्नमेवेतिपंथैरुक्तंतन्न।"होरालग्नभयोर्नेयादुर्बलाद्वर्णदादशे"तिकारिको क्तत्वात्।एवंप्रतिराशिद्वादशद्वादशाब्दाइतिविवेकसंख्यामहादशाभिप्राये णापिसिद्ध्यतीति।अयमर्थोपिसूत्रसंमतएव।एतदभिप्रायेणांतर्दशाविभा गोवृद्धैरुक्तः"एकैकभावस्यैकैकंवर्षंलग्नादिकल्पयेत्।सापर्यायदशालग्नेयु ग्मेतुव्युत्क्रमाद्वदेत्।लग्नंयुग्मंयदातर्हिसम्मुखंतस्यचादिभमि"तिपर्याय दशाअंतर्दशेति यदालग्नंयुग्मराशिस्तदातस्यसंमुखमादिराशिः यथावृष भस्यमेषइति ॥ ३४ ॥

## होरादयःसिद्धाः ॥ ३५ ॥

प्रकृतशास्त्रेवक्ष्यमाणसूत्रेक्वचिद्धोराद्रेष्काणाद्यपेक्षासत्त्वेनतदाकांक्षानिवर्तयन्नाह । होराद्रेष्काणादयःसिद्धाःशास्त्रांतरप्रसिद्धमेषादिगणनयाप्रसिद्धाःनतुद्दष्टचर्गलावद्गुप्ताः । तदुक्तंवृद्धैः "राशेरर्द्धंभवेद्धोराताश्चतुर्विंशतिःस्मृताः ॥ मेषादितासांरोहाणांपरिवृत्तिद्वयंभवेत् ॥ राशित्रिभागाद्रेष्काणास्तेचषट्त्रिंशदीरिताः ॥ परिवृत्तित्रयंतेषांमेषादेःक्रमशोभवेत् ॥ सप्तांशकास्त्वोजगृहेगणनीयानिजेशतः ॥ युग्मराशौतुविज्ञेयाःसप्तमर्क्षाधिनायकात्॥ नवांशेशाश्चरेतस्मात्स्थिरेतन्नवमादितः॥ उभयेतत्पंचमादेरितिचिंत्यंविचक्षणैः ॥ द्वादशांशस्यगणनांतत्तत्क्षेत्राद्विनिर्दिशेदि" ति । वस्तुतस्तुराशिप्राधान्याद्विलक्षणएवेतिध्येयम्॥ ३५॥

## इति प्रथमाध्याये प्रथमःपादः ॥ १ ॥

इतिश्रीनीलकंठज्योतिर्विद्विरचितायांजैमिनीयसूत्रव्याख्यायांसुबोधिन्यांप्रथमाध्यायस्यप्रथमःपादः ॥ १ ॥

---

## अथस्वांशोग्रहाणाम् ॥ १ ॥

अथात्मकारकाश्रयनवांशमालंब्यफलानिवक्तुमुपक्रमते । अत्रकारकांशमधिकरोति।अथानंतरंग्रहाणांरव्यादीनांमध्येस्वांशः आत्मकारकाश्रितोयोंशोनवांशस्तस्मात्फलंविचार्य्यमित्यर्थः ॥ १ ॥

## पंचमूषिकमार्जाराः ॥ २ ॥

कारकाश्रितमेषादिनवांशफलान्याह ।मेषःकारकांशश्चेन्मूषिकमार्जाराद्दुःखदाभवंतीति ॥ २ ॥

## तत्रचतुष्पादः ॥ ३ ॥

वृषःकारकांशश्चेच्चतुष्पादःसुखदाभवंति । मूषिकादयोदुःखदाश्चतुष्पादः सुखदाइत्यत्रैकरूपतयार्थोऽपेक्षितः कृतस्तुभिन्नरूपेणात्रबीजांकि

मुच्यते वृद्धवाक्यमेववीजंवृद्धवाक्यंतु "वृषतोल्यंशकगतेतस्मिन्वाणिज्य वान्भवेत् । मेषसिंहांशकगतेत्रूयान्मूपकदंशनम् ॥ कारकेकार्मुकांशस्थे वाहनात्पतनंभवेदि"ति ॥ ३ ॥

मृत्यौकंडूःस्थौल्यंच ॥ ४ ॥

मिथुनेकारकांशेकंडूः शरीरस्थौल्यंचभवति ॥ ४ ॥

दूरेजलकुष्ठादिः ॥ ५ ॥

कर्केस्वांशेजलभयंकुष्ठरोगोभवति ॥ ५ ॥

शेषाःश्वापदानि ॥ ६ ॥

सिंहांशश्चेच्छ्वापदानिशुनकादयोदुःखदाभवंति ॥ ६ ॥

मृत्युवन्मायाग्निकणश्च ॥ ७ ॥

कन्याकारकांशश्चेन्मृत्युवन्मिथुनांशवद्भवति अग्निकणश्चअग्निकणेन दुःखदश्चभवति ॥ ७ ॥

लाभेवाणिज्यम् ॥ ८ ॥

तुलाकारकांशेवाणिज्यवान्स्यात् ॥ ८ ॥

अन्नजलसरीसृपाःस्तन्यहानिश्च ॥ ९ ॥

अन्नवृश्चिकांशेजलसर्प दयोदुःखदाभवंति मातुःस्तन्यंदुग्धंचशुष्यति॥९

समेवाहनादुच्चाच्चक्रमात्पतनम् ॥ १० ॥

धनुषिकारकांशेवाहनादूर्ध्वप्रदेशाच्चक्रमात्किंचिद्वस्तुसंलग्नतयापतनं भवति नष्टांटेतीत्यर्थः ॥ १० ॥

जलचरखेचरखेटकंडूदुष्टग्रंथयश्चरिःफे ॥ ११ ॥

मकरेकारकांशेजलचरामत्स्यादयः खेचराःपक्षिणःखेटाग्रहाएतेफल दाभवंति कंडूदुष्टग्रंथिरोगाश्चभवंति दुष्टग्रंथिगंडादिकम् ॥ ११ ॥

तडागादयोधर्मे ॥ १२ ॥

कुंभेकारकांशेतडागादयः तडागवापीकूपादिकर्त्तारोभवंति ॥१२॥

उच्चेधर्मनित्यताकैवल्यंच ॥ १३ ॥

मीनेकारकांशेधर्मनित्यत्वंकैवल्यंमुक्तिश्चभवति।कारकस्यांशादिगुणैः फलंवृद्धैःसंगृहीतम् "शुभराशौशुभांशेवाकारकांशेधनीभवेत् ।तदंशकेंद्रेषु शुभेराजानूनंप्रजायते । कारकेशुभराश्यंशेलग्नांशस्थेशुभग्रहे । उपग्रह स्यपाश्चात्त्येस्वोच्चस्वर्क्षशुभर्क्षगे ॥ पापदृग्योगरहितेकैवल्यंतस्यनिर्दिशे त् ॥ मिश्रेमिश्रंविजानीयाद्विपरीतेविपर्ययः" तदंशकेंद्रेषुकारका श्रितांशकुंडल्यांकेंद्रेष्वित्यर्थः । पाश्चात्त्येअंत्यग्रहेइत्यर्थः मिश्रेपापशु भदृग्योगेमिश्रंस्वर्गवासःविपरीतेपापमात्रदृग्योगसद्वित्योविपर्ययः नमु क्तिर्नस्वर्गवासइति "चंद्रभृग्वारवर्गस्थेकारकेपारदारिकः ॥ वृषतौ ल्यंशकगतेतस्मिन्वाणिज्यवान्भवेत् ॥ मेषसिंहांशकेतस्मिन्ब्रूयान्मू षिकदंशनम् ॥ कारकेकार्मुकांशस्थेवाहनात्पतनंभवेत्" ॥ १३ ॥

तत्ररवौराजकार्यपरः ॥ १४ ॥

अथकारकांशेग्रहस्थित्यादिनाफलान्युपदिशति । कारकांशेसूर्येसति राजकार्यतत्परोभवति ॥ १४ ॥

पूर्णेंदुशुक्रयोर्भोगीविद्याजीवीच ॥ १५ ॥

कारकांशेपूर्णेंदुशुक्रयोःसतोर्भोगीविद्याजीवीचस्यात् ॥ १५ ॥

धातुवादीकौंतायुधोवन्हिजीवीचभौमे ॥ १६ ॥

कारकांशेभौमेसतिधातुवादीरसायनविद्यावान्बर्छीतिभाषयाप्रसिद्धा युधः वन्हिकृतजीवनवांश्चस्यात् ॥ १६ ॥

वणिजस्तंतुवायाःशिल्पिनोव्यवहारविदश्चसौम्ये॥१७॥

कारकांशेबुधेसतिवणिक्प्रभृतयोभवंति ॥ १७ ॥

कर्मज्ञाननिष्ठावेदविदश्चजीवे ॥ १८ ॥

कारकांशेगुरौसतिकर्मनिष्ठादयोभवंति ॥ १८ ॥

राजकीयाःकामिनःशतेंद्रियाश्वशुक्रे ॥ १९ ॥

कारकांशेशुक्रेसतिराजाधिकारवंतः बहुस्त्रीस्पृहालवः शतवर्षजीविनश्चभवंति शतंशतवर्षमिंद्रियाणियेषामितिस्वामिनः। पंथास्तुशतानिइंद्रियाणियेषामितिवदंति तन्न इंद्रियाणांशतत्वादर्शनात् ॥ १९ ॥

प्रसिद्धकर्माजीवःशनौ ॥ २० ॥

कारकांशेशनौसतिलोकप्रसिद्धकर्मणाजीवेदित्यर्थः ॥ २० ॥

धानुष्काश्चोराश्चजांगलिकालोहयंत्रिणश्चराहौ ॥ २१ ॥

कारकांशेराहौसतिधानुष्काश्चोराश्चस्युः किंवाजांगलिकालोहयंत्रिणश्चस्युः वैकल्पिकमिदंफलद्वयंकथमवगतामितिचेत् मध्येचकारोपादानादेवअन्यसूत्रेष्वंत्यएवचकारउपात्तः अत्रमध्येकिमर्थमिति ॥ २१ ॥

गजव्यवहारिणश्चोराश्चकेतौ ॥ २२ ॥

कारकांशेकेतौफलमिदम् ॥ २२ ॥

रविराहुभ्यांसर्पेनिधनम् ॥ २३ ॥

कारकांशेरविराहुस्थित्यासर्पान्मृतिर्भवति ॥ २३ ॥

शुभदृष्टेसन्निवृत्तिः ॥ २४ ॥

शुभग्रहावलोकितेरविराहुयोगेसर्पान्मृतिर्नस्यात् ॥ २४ ॥

शुभमात्रसंबंधाज्जांगलिकः ॥ २५ ॥

कारकांशगयोःरविराह्वोः शुभमात्रयोगेसतिजांगलिकोविषवैद्योभवेत् मात्रशब्देनपापनिवृत्तिः ॥ २५ ॥

कुजमात्रदृष्टेगृहदाहकःअग्निदोवा ॥ २६ ॥

कारकांशगयोरविराह्वोःकुजदृष्टौसत्यांस्वगृहदाहकोऽग्निदोवाभवति २६

## शुक्रदृष्टेर्नदाहः ॥ २७ ॥

कारकांशगतरविराहोःशुक्रदृष्टौसत्यांगृहदाहकोनस्यात् किन्तु अग्निदानमात्रंकरोतीत्यर्थः ॥ २७ ॥

## गुरुदृष्टेस्त्वासमीपगृहात् ॥ २८ ॥

कारकांशगयोरविराह्वोःगुरुदृष्टौसत्यांशुक्रदृष्टावसत्यामासमीपगृहात्समीपगृहपर्य्यंतंदाहःस्यात् नस्वगृहमात्रस्य ॥ २८ ॥

## सगुलिकेविषदोविषहतोवा ॥ २९ ॥

कारकांशेगुलिकसहितेसतिपरस्मैविषदातावास्वयंविषेणहतोवास्यात् गुलिकानयनप्रकारस्तुवृद्धैरुक्तः "रविवारादिशन्यन्तंगुलिकादिनिरूप्यते ॥ दिवसानष्टधाकृत्वावारेशाद्गणयेत्क्रमात् ॥ अष्टमोंशोनिरीशः स्याच्छन्यंशोगुलिकःस्मृतः ॥ रात्रिमप्यष्टधाभक्त्वावारेशात्पंचमादितः ॥ गणयेदष्टमःखंडोनिष्पत्तिःपरिकीर्तितः ॥ शन्यंशोगुलिकःप्रोक्तो गुर्वंशेयमघंटकः ॥ भौमांशेमृत्युरादिष्टोरव्यंशे कालसंज्ञकः ॥ सौम्यांशेऽर्द्धप्रहरकः स्पष्टकर्मप्रदेशकः" रव्यादिसप्तवारेषुदिनमानमष्टधाविभज्यतत्तद्वारेएकंप्रथमखंडाधिपंकृत्वाऽग्रिमखंडेषुतत्तद्वारेशादग्रिमग्रहात्क्रमेणेशत्वेनजानीयादष्टमःखंडस्तुनिरीशः एवंचसप्तसुवारेषुशन्यंशोगुलिकनामातथाचरविवारेसप्तमः सोमेषष्ठः भौमेपंचमः बुधेचतुर्थः गुरौतृतीयः शुक्रेद्वितीयः शनौप्रथमः खंडोगुलिकाभवंति सप्तस्वपिवारेषुरात्रिमानमष्टधाविभज्य तद्वारेशात्पंचमाद्याःखंडाधिपा ज्ञेयाःरात्रावप्यष्टमःखंडोनिरीशःएवंचरविरात्रौतृतीयःखंडः सोमेद्वितीयः भौमेप्रथमः बुधेसप्तमः गुरौषष्ठः शुक्रेपंचमः शनौचतुर्थःखंडो गुलिकाभवंति एवंसर्वेषुदिनेषु रात्रौचगुरुखंडोयमघंटनामाबुधखंडोऽर्द्धप्रहरकाख्यःरव्यंशःकालसंज्ञःभौमांशोमृत्युनामेतिज्ञेयंस्पष्टकर्मइति॥ गुलिकादीनां स्पष्टीकरणंतु स्वस्वदेशलग्नप्रमाणानुसारेण तत्तत्खंडकालान्तलग्नानिस्पष्टानिकृत्वा गुलिकादिस्पष्टलग्नेकस्यांशोस्तिसएवका

रकांशश्चेत्सगुलिकोजातइतिविवेचनीयम् । तथाचसंग्रहः " तथाचरवि वारादौदिनेगुलिकसंस्थितिः ॥ सप्तर्तुशरवेदत्रिद्विकुखंडेपुहिक्रमात् ॥ रात्रौत्रिद्विकुसप्तर्तुपंचतुर्येपुतत्स्थितिरि"ति ॥ २९ ॥

चंद्रदृष्टौचौराऽपहृतधनश्चौरोवा ॥ ३० ॥

सगुलिकेकारकांशेचंद्रदृष्टौसत्यां चौरैर्नीतधनः स्वयमेववाचौरः स्यात् ॥ ३० ॥

बुधमात्रदृष्टेबृहद्वीजः ॥ ३१ ॥

सगुलिकेकारकांशेऽन्यग्रहादृष्टत्वेसतिबुधदृष्टेस्थूलवृषणोभवति॥३१॥

तत्रकेतौपापदृष्टेकर्णच्छेदःकर्णरोगोवा ॥ ३२ ॥

सगुलिकेइतिपदंनिवृत्तंतत्रकारकांशेनवांशकुण्डल्यांकेतौसतिपापदृष्टेकर्णच्छेदःकर्णरोगोवाभवति ॥ ३२ ॥

शुक्रदृष्टेदीक्षितः ॥ ३३ ॥

सकेतौकारकांशेशुक्रदृष्टेसतिकयाचिद्यज्ञक्रिययादीक्षितःस्यात्॥३३॥

बुधशनिदृष्टेनिर्वीर्य्यः ॥ ३४ ॥

सकेतौकारकांशेबुधशनिदृष्टेनपुंसकःस्यात् ॥ ३४ ॥

बुधशुक्रदृष्टेपौनःपुनिकोदासीपुत्रोवा ॥ ३५ ॥

सकेतौकारकांशेबुधशुक्रदृष्टेपुनःपुनरुक्तवचनवक्तादासीपुत्रोवा स्यात् ॥ ३५ ॥

शनिदृष्टेतपस्वीप्रेष्योवा ॥ ३६ ॥

सकेतौकारकांशेखेटांतरेणादृष्टेपिशनिदृष्टेतपस्वीप्रेष्योवास्यात्॥३६॥

शनिमात्रदृष्टेसंन्यासाभासः ॥ ३७ ॥

सकेतौकारकांशेखेटांतरेणादृष्टेसंन्यासाभासः नपूर्णसंन्यासइत्यर्थः । केतावितिनिवृत्तम् ॥ ३७ ॥

तत्ररविशुक्रदृष्टेराजप्रेष्यः ॥ ३८ ॥

कारकांशेरविशुक्राभ्यांदृष्टेराजभृत्योभवति ॥ ३८ ॥

रिःफेबुधेबुधदृष्टेवामन्दवत् ॥ ३९ ॥

अथकारकांशाद्दशमांशमवलंब्यविचारयति।कारकांशाद्दशमेबुधेसति बुधदृष्टेवासतिमंदवत्शनिवत् प्रसिद्धकर्माजीवःशनावितिसूत्रोपात्तं फलंभवतीति ॥ ३९ ॥

शुभदृष्टेस्थेयः ॥ ४० ॥

कारकांशाद्दशमेबुधेतरशुभग्रहदृष्टेस्थिरोभवति नचंचलः बुधेतरशुभदृष्टत्वंकथंज्ञातमितिचेत् बुधदृष्टिफलस्योक्तत्वादेव ॥ ४० ॥

रवौगुरुमात्रदृष्टेगोपालः ॥ ४१ ॥

कारकांशाद्दशमेरवौसतिखेटांतरादृष्टेगुरुमात्रदृष्टेगोरक्षकोभवति॥४१॥

दारेचन्द्रशुक्रदृग्योगात्प्रासादः ॥ ४२ ॥

कारकांशाच्चतुर्थफलमाह । कारकांशाच्चतुर्थेचन्द्रशुक्रदृष्टियोगाभ्यां प्रासादवान्भवति ॥ ४२ ॥

उच्चग्रहेपि ॥ ४३ ॥

कारकांशाच्चतुर्थस्थितेउच्चराशिगतग्रहेपिप्रासादवान्भवति ॥ ४३ ॥

राहुशनिभ्यांशिलागृहम् ॥ ४४ ॥

कारकांशाच्चतुर्थस्थितेराहुशनिभ्यांशिलानिर्मितंगृहंभवति ॥ ४४॥

कुजकेतुभ्यामैष्टकम् ॥४५॥ गुरुणादारवम् ॥४६॥ तार्णंरविणा ॥ ४७ ॥

इदंसूत्रत्रयंराहुशनिभ्यामितिसूत्रेणैवकृतव्याख्यानम् ॥ ४५ ॥ ॥ ४६ ॥ ४७ ॥

समेशुभदृग्योगाद्धर्मनित्यःसत्यवादीगुरुभक्तश्च॥ ४८॥

अथकारकांशान्नवमांशफलमाह । कारकांशान्नवमेशुभदृष्टियोगाभ्यां धर्मनिरतत्वादिमान्भवति ॥ ४८ ॥

अन्यथापापैः ॥ ४९ ॥

नवमेपापदृष्टियोगाभ्यांधर्मनित्यत्वादिरहितोभवति ॥ ४९ ॥

शनिराहुभ्यांगुरुद्रोहः ॥ ५० ॥

नवमस्थाभ्यांशनिराहुभ्यांतद्दृग्भ्यांवागुरुद्रोहः ॥ ५० ॥

गुरुरविभ्यांगुरावविश्वासः ॥ ५१ ॥

नवमेगुरुरविदृग्योगाभ्यांगुरावविश्वासोभवति ॥ ५१ ॥

तत्रभृग्वंगारकवर्गेपारदारिकः ॥ ५२ ॥

कारकांशान्नवमेशुक्रभौमान्यतरषड्वर्गेसतिपरस्त्रीसक्तःस्यात्॥५२॥

दृग्योगाभ्यामधिकाभ्यामामरणम् ॥ ५३ ॥

नवमेशुक्रभौमान्यतरषड्वर्गेसतिषड्वर्गापेक्षयाऽधिकाभ्यांशुक्रभौमदृष्टियोगाभ्यांमरणपर्यंतंपारदारिकोभवति ॥ ५३ ॥

केतुनाप्रतिबन्धः ॥ ५४ ॥

कारकांशान्नवमेकेतोर्दृष्टियोगाभ्यांप्रतिबन्धः आमरणंपारदारिकत्वस्यनिवृत्तिर्भवति ॥ ५४ ॥

गुरुणास्त्रैणः ॥ ५५ ॥

नवमस्थितेनवमद्रष्ट्रावागुरुणास्त्रीलोलः ॥ ५५ ॥

राहुणार्थनिवृत्तिः ॥ ५६ ॥

नवमस्थेननवमद्रष्ट्रावाराहुणापरस्त्रीसंगनिवृत्तिर्द्रव्यनाशःस्यात् ॥५६॥

लाभेचंद्रगुरुभ्यांसुंदरी ॥ ५७ ॥

अथकारकांशात्सप्तमफलमाह।अत्रदृक्पदंनिवृत्तं नवमप्रकरणस्यसमाप्तत्वात्।कारकांशात्सप्तमेचंद्रगुर्वोर्योगेसतिस्त्रीसुंदरीभवति ॥ ५७ ॥

राहुणाविधवा ॥ ५८ ॥

सप्तमेराहुयोगेविधवास्त्रीगृहेभवति ॥ ५८ ॥

शनिनावयोधिकारोगिणीतपस्विनीवा ॥ ५९ ॥

स्पष्टम् ॥ ५९ ॥

कुजेनविकलांगी ॥ ६० ॥

अलक्षणांगीत्यर्थः ॥ ६० ॥

रविणास्वकुलेगुप्ताच ॥ ६१ ॥

सप्तमेरवियोगेस्वकुलेभर्तृकुलेगुप्तारक्षितास्यितास्यादामरणंतुस्वातंत्र्येणेतस्ततोऽटनशीलाचकाराद्विकलांगीच ॥ ६१ ॥

बुधेनकलावती ॥ ६२ ॥

गीतवाद्यादिपुकुशला ॥ ६२ ॥

चापेचंद्रेणानावृत्तेदेशे ॥ ६३ ॥

कारकांशाच्चतुर्थेचंद्रेसतिपूर्वोक्तयोगेपुसत्सु अनाच्छादितेदेशेप्रोक्तःस्त्रीप्रथमसंगइत्यर्थः । कारकांशात्सप्तमेधनुषिचंद्रेइतिवार्थः ॥ ६३ ॥

कर्मणिपापेशूरः ॥ ६४ ॥

कारकांशात्तृतीयफलमाह।कारकांशात्तृतीयेपापेसतिशूरःस्यात् ६४॥

शुभेकातरः ॥ ६५ ॥

तृतीयेशुभेकातरः ॥ ६५ ॥

मृत्युचिंतयोःपापेकर्षकः ॥ ६६ ॥

तृतीयषष्ठयोःफलमाह।कारकांशात्तृतीयषष्ठयोर्द्वयोरपिसपापत्वेकृषीवलःस्यात् ॥ ६६ ॥

समेगुरौविशेषेण ॥ ६७ ॥

नवमेगुरौविशेषेणकृपीवलः ॥ ६७ ॥

उच्चेशुभेशुभलोकः ॥ ६८ ॥

अथकारकांशाद्वादशेफलमाहाद्वादशेशुभेसतिशुभलोकप्राप्तिः॥६८॥

केतौकैवल्यम् ॥ ६९ ॥

कारकांशेशुभेसतिमुक्तिरित्यर्थः अथवाकारकांशात्द्वादशेकेतौसति मुक्तिरितिवार्थः ॥ ६९ ॥

क्रियचापयोर्विशेषेण ॥ ७० ॥

कारकांशेमेषेधनुषिवातत्रशुभेसतिविशेषेणमुक्तिःसायुज्यमुक्तिरित्यर्थः।अथवामेषेधनुषिवाद्वादशेकेतौसतिसायुज्यमुक्तिरिति । वस्तुतस्तुशुभापेक्षयाकेतोः सायुज्यमुक्तिदातृत्वायोग्यत्वात्प्रथमव्याख्यैवसमुचितेतिबोध्यम् नचसूत्रकारेणकेतोः शुभत्वमुक्तंकेतोश्चेच्छुभत्वंस्यात्तर्हिचरदशायामत्रशुभः केतुरितिवक्ष्यमाणसूत्रोत्तरदशायामेवशुभःकेतुरन्यत्रनेत्यर्थोवगम्यतइति ॥ ७० ॥

पापैरन्यथा ॥ ७१ ॥

कारकांशात्द्वादशेकारकांशेचपापयोगेन नशुभलोकोनमुक्तिरित्यर्थः ॥ ७१ ॥

रविकेतुभ्यांशिवेभक्तः ॥ ७२ ॥

अमात्यदासेचैवमितिपर्यंतंकेतावितिपदमनुवर्तते।कारकांशेरविकेतुभ्यांमिलिताभ्यां स्थिताभ्यांशिवेभक्तिर्भवति।अग्रेप्येवमेवयोजना ७२॥

चंद्रेणगौर्य्याम् ॥७३॥ शुक्रेणलक्ष्म्याम् ॥ ७४ ॥
कुजेनस्कंदे ॥ ७५ ॥ बुधशनिभ्यांविष्णौ ॥७६॥
गुरुणासांबशिवे॥७७॥राहुणातामस्यांदुर्गायांच ७८॥

एवंस्पष्टम् ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

केतुनागणेशेस्कंदेच ॥ ७९ ॥

तामस्यांभूतादिदेवतायांचेति ॥ ७९ ॥

पापक्षेमंदेक्षुद्रदेवतासु ॥ ८० ॥

कारकांशेपापराशौशनौसतिकर्णपिशाचादिषुभक्तिः ॥ ८० ॥

शुक्रेच ॥ ८१ ॥

कारकांशेपापराशौशुक्रेतथैव ॥ ८१ ॥

अमात्यदासेचैवम् ॥ ८२ ॥

आत्मकारकग्रहान्न्यूनांशोग्रहः अमात्यस्तस्माद्योदासोरव्यादिगण नयापष्ठोग्रहस्तस्मिन्पापर्क्षेकारकांशेसतिक्षुद्रदेवताभक्तिरित्यर्थः । पंथा स्तुअयमर्थःसूत्रसंमतश्चेत्पापर्क्षेमंदशुक्रामात्यदासेषुक्षुद्रदेवतास्वितिसू त्रंभणीतंस्यादितिवदंति । तन्न।एवंचेन्मंदशुक्रामात्यदासेषुमिलितेषुपाप र्क्षेपुसत्सुक्षुद्रदेवताभक्तिरित्यर्थःस्यात् । भवतितुएतेषामन्यतरस्यापिपाप र्क्षस्थित्याक्षुद्रदेवताभक्तिस्तस्माद्योगविभागएवोचितइति ॥ ८२ ॥

त्रिकोणेपापद्वयेमांत्रिकः ॥ ८३ ॥

कारकांशात्पंचमनवमयोःपापद्वयेक्रमेणस्थितेसतिमांत्रिकः मंत्रवे त्ताभवति ॥ ८३ ॥

पापदृष्टेनिग्राहकः ॥ ८४ ॥

त्रिकोणद्वयेसपापेपापदृष्टेभूतादीनांनिग्रहकर्तास्यात् ॥ ८४ ॥

शुभदृष्टेनुग्राहकः ॥ ८५ ॥

त्रिकोणद्वयेशुभदृष्टेनुग्राहकःत्रिकोणेसपापेशुभदृष्टेऽनुग्राहकः लोके पुमनुग्रहकर्तास्यात् ॥ ८५ ॥

शुक्रेंदौशुक्रदृष्टेरसवादी ॥ ८६ ॥

कारकांशेचंद्रेशुक्रदृष्टेसतिरसवादीभवति ॥ ८६ ॥

बुधदृष्टेभिषक् ॥ ८७ ॥

शुक्रेंदौबुधदृष्टेसतिवैद्योभवति ॥ ८७ ॥

चापेचंद्रेशुक्रदृष्टेपांडुश्वित्री ॥ ८८ ॥

कारकांशाच्चतुर्थेचंद्रेशुक्रेदृष्टेसतिश्वेतकुष्ठीभवति ॥ ८८ ॥

कुजदृष्टेमहारोगः ॥ ८९ ॥

चापगेचंद्रेकुजदृष्टेमहारोगःकुष्ठीभवति ॥ ८९ ॥

केतुदृष्टेनीलकुष्टम् ॥ ९० ॥

अर्थःप्राग्वत् ॥ ९० ॥

तत्रमृतौवाकुजराहुभ्यांक्षयः ॥ ९१ ॥

कारकांशाच्चतुर्थेपंचमेवायथायोगंकुजराहूचेत्स्तस्तर्हिक्षयरोगी भवति ॥ ९१ ॥

चंद्रदृष्टौनिश्चयेन ॥ ९२ ॥

उक्तस्थानगयोःकुजराह्वोश्चंद्रदृष्टौसत्यांनिश्चयेनक्षयरोगः चंद्रदृष्टच भावेक्षयःस्वल्पःचंद्रदृष्टौप्रबलइतिभावः ॥ ९२ ॥

कुजेनपिटिकादिः ॥ ९३ ॥

तत्रमृतौवास्थितेनकुजेनपिटकादिर्भवति ॥ ९३ ॥

केतुनाग्रहणीजलरोगोवा ॥ ९४ ॥

तत्रमृतौवाकेतुश्चेत्संग्रहणीजलोदराद्यारोगाभवन्ति ॥ ९४ ॥

राहुगुलिकाभ्यांक्षुद्रविषाणि ॥ ९५ ॥

तत्रमृतौवाराहुगुलिकौयदितर्हिमूषिकादिविषाणिभवंति ॥ ९५ ॥

तत्रशनौधानुष्कः ॥ ९६ ॥

मृताविति निवृत्त। कारकांशेचतुर्थेशनौधनुषिनिपुणः॥ ९६ ॥

केतुनाघटिकायंत्री ॥ ९७ ॥

तत्रकेतुश्चेत्घटिकायंत्रीभवति ॥ ९७ ॥

बुधेनपरमहंसोलगुडीवा ॥९८॥ राहुणालोहयंत्री ॥९९॥ रविणाखड्गी ॥ १०० ॥ कुजेनकुंती ॥ १०१ ॥

तत्रबुधेसतिपरमहंसोलगुडीवा॥ अत्रसर्वत्रापितत्रेतिपदमन्वेति ॥९८॥ ॥ ९९ ॥ १०० ॥ १०१ ॥

मातापित्रोश्चंद्रगुरुभ्यांग्रंथकृत् ॥ १०२ ॥

कारकांशेतत्पंचमांशेवाययायोगंचंद्रगुरूचेद्ग्रंथकर्त्ताभवति॥ १०२॥

शुक्रेणकिंचिदूनम् ॥ १०३ ॥

कारकांशेतत्पंचमेवाचंद्रशुक्राभ्यांकिंचिदूनंग्रंथकर्तृत्वंस्यात्।ननुअयमर्थस्त्वयाकथंलब्धइतिचेत्केवलशुक्रेणाग्निफलस्यवक्तव्यत्वात् । नचग्रंथकर्तृत्वेकिंचिदूनत्वंकव्यादित्वंचभवतीतिवाच्यम् एवंचेत्शुक्रेणकिंचिदूनंग्रंथकृत्कविर्वाग्मीकाव्यज्ञश्चेतिसूत्रंप्रणीतंस्यात् तस्मादयमेवार्थः सूत्रसंमतः। नचसमासांतःपातिपदानामेकांशानुवृत्तेरनौचित्यमितिवाच्यम् अस्मिन्ग्रंथेत्वियंरीतिरस्त्येवेति ॥ १०३ ॥

बुधेनततोपि ॥ १०४ ॥

कारकांशेतत्पंचमेवाचंद्रबुधाभ्यांशुक्रयोगापेक्षयापिन्यूनग्रंथकर्तृत्वंस्यात् ॥ १०४ ॥

शुक्रेणकविर्वाग्मीकाव्यज्ञश्च ॥ १०५ ॥

मातापित्रोरेकत्रानुक्तयोगेकव्यादिःस्यात् ॥ १०५ ॥

गुरुणासर्वविद्ग्रंथिकश्च ॥ १०६ ॥

अर्थःपूर्ववत् ॥ १०६ ॥

नवाग्मी ॥ १०७ ॥

घक्तृत्वंनेत्यर्थः ॥ १०७ ॥

विशिष्यवैयाकरणोवेदवेदांगविच्च ॥ १०८ ॥

पुनरपिगुरोरेवफलमाह । स्पष्टम् ॥ १०८ ॥

सभाजडःशनिना ॥ १०९ ॥

उक्तस्थानगेनमंदेनसभाजाड्यम् ॥ १०९ ॥

बुधेनमीमांसकः ॥ ११० ॥

स्पष्टम् ॥ ११० ॥

कुजेननैयायिकः ॥ १११ ॥

स्पष्टम् ॥ १११ ॥

चंद्रेणसांख्ययोगज्ञःसाहित्यज्ञोगायकश्च ॥ ११२ ॥

स्पष्टम् ॥ ११२ ॥

रविणावेदांतज्ञोगीतज्ञश्च ॥ ११३ ॥

स्पष्टम् ॥ ११३ ॥

केतुनागणितज्ञः ॥ ११४ ॥

स्पष्टंसूत्रम् ॥ ११४ ॥

गुरुसंबंधेनसंप्रदायसिद्धिः ॥ ११५ ॥

पूर्वोक्तयोगेगुरुदृष्टिगुरुषड्वर्गसंबंधेसतितत्तच्छास्त्रसंप्रदायज्ञो भवति ॥ ११५ ॥

भाग्येचैवम् ॥ ११६ ॥

कारकांशात्द्वितीयेपिचंद्रगुर्वादिपूर्वोक्तयोगेनग्रंथकर्तृत्वादिपूर्वोक्तंफलंस्यादित्यर्थः ॥ ११६ ॥

सदाचैवमित्येके ॥ ११७ ॥

कारकांशात्तृतीयेपिपूर्वोक्तग्रहयोगेनग्रंथकर्तृत्वादिफलमूह्यमित्येके ११७

भाग्येकेतौपापदृष्टेस्तब्धवाक् ॥ ११८ ॥

कारकांशात्द्वितीयेकेतौपापदृष्टेसतिस्तब्धवाक्किंचित्संलग्नवचनः किंवाप्रत्युत्तरदानेझटित्यसमर्थवाणीकःस्यात ॥ ११८ ॥

स्वपितृपदाद्भाग्येरोगयोःपापेसाम्येकेमद्रुमः ॥ ११९ ॥

स्वकीयजन्मलग्नाज्जन्मलग्नारूढाद्वाद्वितीयाष्टमयोराश्योःकेवलौपापौ स्तः सग्रहत्वेपिशुभपापान्यतरैकग्रहत्वेनद्विग्रहवत्त्वादिनासमसंख्यौचे त्ततस्तदाकेमद्रुमयोगोभवतिाननुस्वशब्देनकारकांशबोधःकथंनउच्यते स्वशब्दःकारकांशबोधकश्चेत्पितृपदादितिवाक्यादेवतल्लाभेपुनरुपादानं व्यर्थस्यात् । स्वशब्दाभावेपितृपदात्कारकांशात्कारकांशारूढादयमर्थः

रूढाज्जन्मलग्नाद्वापापौक्षीहानिगौयादि ॥ केवलौसग्रहत्वेपिसमसंख्यौशु भाशुभौ ॥ चंद्रदृष्टौविशेषेणयोगःकेमद्रुमोमतः”इतियत्तुकारकलग्नरूढे भ्यइतिस्वामिभिरुक्तं तद्वृद्धसंमतंनेति ॥ ११९ ॥

चंद्रदृष्टौविशेषेण ॥ १२० ॥

मोक्तयोगेसतिद्वितीयाष्टमयोश्चंद्रदृष्टौसत्यांविशेषेणकेमद्रुमोदरिद्रयो गोभवति ॥ १२० ॥

सर्वेषांचैवंपाके ॥ १२१ ॥

ननुपूर्वोक्तफलानिकिंसर्वदाभवंति आहोस्वित्कालविशेषेइत्याह । सर्वेषांराशीनांपाकेदशायामेवंपूर्वोक्तानिफलानिभवंति । अथवासर्वे षांराशीनांपाकेचदशारंभकालेपिएवंपूर्वोक्तकेमद्रुमयोगविचारःकार्यःके मद्रुमेसतिदशायांदारिद्र्यंस्यादिति ॥ १२१ ॥

इतिप्रथमाध्यायस्यद्वितीयःपादः ॥ २ ॥

इतिजैमिनीयसूत्रप्रथमाध्यायस्यद्वितीय-

पादव्याख्यानम् ॥ २ ॥

---

अथपदम् ॥ १ ॥

अथारूढकुंडलीग्रहानवलंब्यफलानिवक्तुंपदमधिकरोति।अथैतदनं

तरंयावदीशाश्रयंपदमृक्षाणामितिसूत्रलक्षितमारूढापरपर्यायंपदमधिक्रियते ॥ १ ॥

व्ययेसग्रहेग्रहदृष्टेश्रीमंतः ॥ २ ॥

अथैकादशस्थानफलमाह । लग्नपदादेकादशेसग्रहेग्रहांतरदृष्टेसति लक्ष्मीवंतोभवंति ॥ २ ॥

शुभैन्यार्य्योलाभः ॥ ३ ॥

एकादशस्थाग्रहाएकादशद्रष्टारश्चग्रहायदिशुभास्तर्हिन्यायमार्गाल्लाभःस्यात् ॥ ३ ॥

पापैरमार्गेण ॥ ४ ॥

पापग्रहाश्चेदेकादशस्थाद्रष्टारश्चतर्ह्यमार्गेणशास्त्रविरुद्धमार्गेणलाभोमिश्रैर्मिश्रोलाभइतिज्ञेयम् ॥ ४ ॥

उच्चादिभिर्विशेषात् ॥ ५ ॥

उच्चस्वगृहादिस्थग्रहयोगादिनाविशेषप्राप्तिः उच्चादिगुणवद्भ्यांशुभपापाभ्यांन्यायादन्यायाच्चविशेषतोलाभइत्यर्थः।वृद्धैरप्युक्तम् "आरूढाल्लाभभवनंग्रहःपश्येत्तुनव्ययम् ॥यस्यजन्मनिसोपिस्यात्प्रबलोधनवानपि॥द्रष्टृग्रहाणांबाहुल्येतदाद्रष्टरितुंगगे ॥सार्गलेचापितत्रापिबल्वर्गलसमागमे ॥ शुभग्रहार्गलेतत्रतत्राप्युच्चग्रहार्गले ॥सुखानिस्वामिनादृष्टेलग्नभाग्याधिपेनवा॥ जातस्यपुंसःप्राबल्यंनिर्दिशेदुत्तरोत्तरमि"ति कोपिग्रहोयदिद्वादशंनपश्यतीति ॥ ५ ॥

नीचग्रहदृग्योगाद्व्ययाधिक्यम् ॥ ६ ॥

अथपदात्द्वादशफलमाह । द्वादशेग्रहसत्त्वेग्रहांतरदृष्टौभूयान्व्ययइत्यर्थ । :शुभग्रहेसद्व्ययःपापेऽसद्व्ययइति ॥ ६ ॥

रविराहुशुक्रैर्नृपात् ॥ ७ ॥

पदात्द्वादशेरविराहुशुक्रैर्व्यस्तैःसमस्तैर्वाराजमूलोव्ययः स्यात्॥७॥

चंद्रदृष्टौनिश्चयेन ॥ ८ ॥

द्वादशगरव्यादौचंद्रदृष्टिश्चेन्निश्चयाद्राजमूलोव्ययः चंद्रदृष्ट्यभावेतु संदिग्धइति ॥ ८ ॥

## बुधेनज्ञातिभ्योविवादाद्वा ॥ ९ ॥

बुधेद्वादशगेज्ञातिनिमित्तात्कटकाद्वाद्रव्यव्ययः ॥ ९ ॥

## गुरुणाकरमूलात् ॥ १० ॥

गुरुद्वादशेचेत्करव्याजेनव्ययः ॥ १० ॥

## कुजशनिभ्यांभ्रातृमुखात् ॥ ११ ॥

द्वादशेकुजशनीचेद्भ्रात्रादिद्वारान्ययः । अथैकादशेलाभंव्ययवंदाति दिशति ॥ ११ ॥

## एतैर्व्ययएवंलाभः ॥ १२ ॥

एतैर्द्वादशस्थानपठितैर्ग्रहैर्यथाव्ययउक्तस्तथातैरेवैकादशगैस्तेनैवप्रकारेणलाभोपिभवतीत्यर्थः ॥ १२ ॥

## लाभेराहुकेतुभ्यामुदररोगः ॥ १३ ॥

अथपदात्सप्तमेफलमाह।पदात्सप्तमेराहुकेत्वोरन्यतरेणोदररोगः स्यात् ॥ १३ ॥

## तत्रकेतुनाझटितिज्यानिलिंगानि ॥ १४ ॥

अथपदाद्वितीयस्थकेतोःफलमाह।तत्रपदाद्वितीयेकेतुयोगेनशीघ्रमेववार्द्धक्यचिन्हानिभवंति । यत्तुस्वाम्यादिभिर्लाभपदानुवृत्त्या तत्रसप्तमेइत्युक्तम् तन्न । एवंचेत्तर्हिकेतुनाझटितिज्यानिलिंगानीतिसूत्रंप्रणीतं स्यात्तत्रेतिकिमर्थमिति अन्यच्चचंद्रगुरुशुक्रपुश्रीमंतइतिवक्तव्यत्वात्सप्तमस्यधनविचाराश्रयत्वाभावादिति । तदुक्तंवृद्धैः " आरूढात्षष्ठभेपापे चोरःस्याच्छुभवर्जिते " षष्ठभेद्वितीये " आरूढाद्वापिसौम्येतुसर्वेदिश्यधिपोभवेत् ॥ सर्वज्ञस्तत्रजीवेस्यात्कविर्वादीचभार्गवे " वापिद्वितीये इत्यर्थः ॥ १४ ॥

## चंद्रगुरुशुक्रैपुश्रीमंतः ॥ १५ ॥

पदाद्वितीयेव्यस्ततयासमस्ततयावा चंद्रादिपुसत्सु श्रीमंतो भवंति ॥ १५ ॥

उच्चेनव ॥ १६ ॥

द्वितीयस्थितेनशुभपापान्यतरग्रहेणोच्चस्थितेनवाश्रीमंतइत्यर्थः१६॥

स्वांशवदन्यत्प्रायेण ॥ १७ ॥

अन्यदत्रानुक्तंफलंकारकांशवद्बोध्यम् प्रायेणेत्युक्त्यानसर्वत्रकारकांशवत्फलम् औपदेशिकशास्त्रविरुद्धस्यातिदेशिकशास्त्रस्याप्रवृत्तेरिति१७॥

लाभपदेकेंद्रेत्रिकोणेवाश्रीमंतः ॥ १८ ॥

लग्नारूढात्केंद्रेत्रिकोणेवालाभपदेलग्नात्सप्तमारूढेवातिलक्ष्मीवंतोभवंति ॥ १८ ॥

अन्यथादुःस्थे ॥ १९ ॥

लग्नारूढात्सप्तमारूटेदुःस्थेषष्ठाष्टमव्ययस्थेवत्यन्यथास्युः श्रीमंतोनेत्यर्थः ॥ १९ ॥

केंद्रेत्रिकोणोपचयेपुद्वयोर्मैत्री ॥ २० ॥

लग्नपदात्सप्तमपदेकेंद्रेत्रिकोणोपचयेगेसतिद्वयोर्भार्याभर्त्रोर्मैत्रीभवति एवंलग्नपदात्पुत्रादिभावपदेकेंद्रेत्रिकोणोपचयगेसतितयोस्तयोर्मैत्रीज्ञेया। अत्रोपचयपदंषष्ठातिरिक्तपदंरिपुरोगचिंतासुवैरमितिवक्तव्यत्वात्॥२०॥

रिपुरोगचिंतासुवैरम् ॥ २१ ॥

लग्नपदात्तत्तद्भावपदेषष्ठाष्टमव्ययगेसतितयोस्तयोर्वैरंभवति। लाभपदइत्यादिसूत्रचतुष्टयंवृद्धैःसंगृहीतं "लग्नारूढंदारपदंमिथःकेंद्रगतंयदि॥ त्रिलाभेवात्रिकोणेवातथाराजान्यथाधमः ॥ आरूढौपुत्रपित्रोस्तुत्रिलाभकेंद्रगौयदि ॥ द्वयोर्मैत्रीत्रिकोणेतुसाम्यंद्वेषोन्यथाभवेत् ॥ एवंदारादिभावानामपिपत्यादिभिस्तथा ॥ जातकद्वयमालोक्यचिंतनीयंविचक्षणैः" इति ॥ २१ ॥

पत्नीलाभयोर्दिष्ट्यानिराभासार्गलया ॥ २२ ॥

पत्नीलाभयोर्ल्रग्नपदतत्सप्तमयोर्निराभासार्गलयानिष्प्रतिबंधार्गलया दिष्ट्याभाग्यंभवति। दिष्ट्येत्याकारांतःशब्दः"दिष्ट्यासमुपजोषंचेत्यानं

दे"इत्यमरः। अथवादिष्टमेवदिष्ट्यांदिष्ट्यंभागधेयंयेषांतेदिष्ट्याःभाग्यवं
तइत्यर्थः अत्रप्राचीनैरुक्तम् "यस्यपापःशुभोवापिग्रहस्तिष्ठेच्छुभार्गले॥
तेनदृष्टेक्षितंलग्नंप्राबल्यायोपकल्पते ॥ यदिपश्येद्ग्रहस्तत्रविपरीतार्गल
स्थित"इति।पत्नीलाभयोरितिभाग्ययोगेसिद्धेपदरूपलग्नगतदृष्ट्यातस्य
वभाग्यप्राबल्यरूपोगुणोऽनेनविज्ञापितइतिविशेषः ॥ २२ ॥

## शुभार्गलेधनसमृद्धिः ॥ २३ ॥

पदसप्तमयोःशुभैरेवयद्यर्गलंतर्हिधनंबहुवर्द्धतेएतेनपापार्गलेनधनंभव
ति शुभग्रहार्गलेंततोविशेषइत्यर्थः । पूर्वसूत्रेशुभपापसाधारण्येनविपरी
तार्गलंविनिर्मुक्तार्गलस्यधनादिसत्त्वलक्षणभाग्ययोगःफलमित्युक्तम्।अ
स्मिन्सूत्रेतुशुभमात्रघटितेधनवृद्धिः सार्वदिशीपापमात्रघटितेधनवत्त्व
मात्रंपापशुभोभयघटितेकदाचिद्धनसमृद्धिःकदाचिद्धनवत्त्वेवेति।ननु भ
यपुण्येतिश्लोकोक्तशुभपापसाधारणविपरीतार्गलभिन्नशुभार्गलमेवात्रशुभा
र्गलत्वेनकुतोनगृह्यतइतिचेत्। उच्यते।सूत्रद्वयेएकरूपाचेदर्गलास्यात्तर्हि
पूर्वेणैवेतिसूत्रस्यवैयर्थ्यापत्तेरितिभावः । नचभाग्यवत्त्वधनवत्त्वभेदादिति
वाच्यम् धनंविनाभाग्यवत्ताऽप्रतीतेरित्यलम् ॥ २३ ॥

## जन्मकालघटिकास्वेकदृष्टासुराजानः ॥ २४ ॥

जन्मलग्नंप्रसिद्धम्काललग्नंहोरालग्नंघटिकाघटिकालग्नम्एतेषुत्रिष्व
पिकेनचिदेकेनग्रहेणदृष्टेषुराजानोभवंतिअत्रैकग्रहदृष्टिविषयत्वमपेक्षितंन
त्वेकग्रहमात्रदृष्टत्वंकाललग्नानयनंप्रागुक्तम्। घटिकालग्नानयनंतुवृद्धैरुक्त
म् "लग्नादेकघटीमात्रंयातिलग्नंदिनेदिने॥परंतुघटिकालग्नंनिर्दिशेत्काल
वित्तमः"इति स्पष्टार्थः ॥ २४ ॥

## पत्नीलाभयोश्चराश्यंशकदृक्काणैर्वा ॥ २५ ॥

जन्मराशिकुंडलीनवांशकुंडलीदृक्काणकुंडलीषुलग्नसप्तमयोर्द्वयोरपि
एकग्रहदृष्टयोःसतोःराजानोभवंति। द्रेष्काणानयनंराशित्रिभागइतिपूर्व
मुक्तम् । तथाचकुंडलीत्रयभेदेनलग्नसप्तमद्वयगणनयाषट्संपद्यंतेषट्सू

पिएकग्रहदृष्टौराजयोगःपूर्णइत्यर्थः । राशिर्जन्मकालेचंद्राक्रांतराशिर्नतु लग्नमिति ॥ २५ ॥

## तेष्वेकस्मिन्नयूनेन्यूनम् ॥ २६ ॥

राजयोगद्वयेपिकिंचिद्विकल्यपरमिदंसूत्रं।ताश्रतानिचतानितेपुराइयं शकदृक्काणेपुजन्मकालघटिकासुच एकस्मिन्नेकग्रहदृष्ट्यान्यूनेसतिद्वयो र्लग्नयोरेकदृष्टयोःसतोः न्यूनराजत्वमित्यर्थः । एतदुक्तंवृद्धैः "विलग्नघ टिकालग्नहोरालग्नानिपश्यति॥उच्चगृहेराजयोगोलग्नद्वयमथापिवा ॥राशे र्दृकाणतोंशाच्चराशेरंशादथापिवा । यद्वाराशिदृकाणाभ्यांलग्नद्रष्टातुयोग दः॥प्रायेणायंजातकेपुप्रभूणामेवदृश्यते।"वाक्यांतरंच"जन्मकालघटी लग्नेष्वेकेनैवेक्षितेपुतु॥ उच्चारूढेतुसंप्राप्तेचंद्राक्रांतेविशेषतः॥क्रांतेवागुरु शुक्राभ्यांकेनाप्युच्चग्रहेणवा॥दुष्टार्गलग्रहाभावेराजयोगोनसंशयः"इति। जन्मेतिसूत्रोक्तंराजयोगमंशदृक्काणयोरतिदिशति ॥ २६ ॥

## एवमंशतोदृक्काणतश्च ॥ २७ ॥

यथाजन्मेतिसूत्रेजन्मलग्नकुंडल्याहहोराघटिकाकुंडल्योःसमुच्चय स्तथैवांशकुंडल्यादृकाणकुंडल्याचपृथक्पृथक्कालघटिकाकुंडल्योसमु च्चिते तथाचलग्नकालघटिकासु अंशकालघटिकासुदृक्काणकालघटिकासु चैकदृष्टासुराजानइतिराजयोगत्रयंसिद्ध्यति । राजयोगांतरंग्रंथांतरा द्वृद्धैःसंगृहीतं "निशार्द्धोच्चदिनार्द्धोच्चपरंसार्द्धद्विनाडिका ॥शुभातदुद्भवो राजाधनीवातत्समोपिवे"ति ॥ २७ ॥

## शुक्रचंद्रयोर्मिथोदृष्ट्योःसिंहस्थयोर्वायानवंतः ॥ २८ ॥

अथयानयोगमाह।शुक्रचंद्रौयत्रकचिद्विद्यमानौयदिपरस्परंदृष्टिभाजौ तार्हियानवंतो भवंति एवंशुक्रचंद्रावेवयदिसिंहस्थौतृतीयगौशुक्राच्चंद्रेतृती यगेचंद्राच्छुक्रेवातृतीयगेसत्यपियानवंतइतिगोलार्थः।तदुक्तंवृद्धैः "चंद्रः कविंकविश्चंद्रंपश्यत्यपितृतीयगे ॥ शुक्राच्चंद्रेततःशुक्रेतृतीयेवाहनाधि वान्" ॥ २८ ॥

## शुक्रकुजकेतुषुवैतानिकाः ॥ २९ ॥

शुक्रादिषुमिथोदृष्टिमत्सुपरस्परंतृतीयस्थेषुवावितानादिराजचिन्हः तोभवंति ॥ २९ ॥

## स्वभाग्यदारमातृभावसमेषुशुभेषुराजानः ॥ ३० ॥

आत्मकारकाद्राश्यादिनाद्वितीयचतुर्थपंचमभावतुल्येषुशुभग्रहेषुराजानोभवंति । एवंचतत्तत्कारकवशात्तेषांतेषामपिफलमूह्यं । तस्मात्पुत्रादिकारकेष्वपिराजयोगबलेपुत्रादीनामपिराजत्वंवाच्यम् ॥ ३० ॥

## कर्मदासयोःपापयोश्च ॥ ३१ ॥

आत्मकारकात्तृतीयषष्ठभावसमयोःपापयोश्चराजानोभवंति॥३१॥

## पितृलाभाधिपाच्चैवम् ॥ ३२ ॥

कारकेनिरुक्तंयोगद्वयंलग्नसप्तमाधिपयोरतिदिशति । लग्नाधिपात्सप्तमाधिपाच्चैवंद्वितीयचतुर्थपंचमभावसमयेषुशुभेषुतृतीयषष्ठभावसमयोः पापयोश्चराजानइत्यर्थः । नचारूढाधिकारात्पितृपदेनारूढोग्राह्यइतिवाच्यं जन्मेतिसूत्रात्सूत्रकारेणक्वचित्कारकात्क्वचिज्जन्मलग्नाद्युक्तत्वात् पितृशब्देनास्मिन्ग्रंथेप्रायोलग्नस्यैवग्रहणाच्चेति ॥ ३२ ॥

## मिश्रेसमाः ॥ ३३ ॥

यदितत्रपापःशुभस्थानेशुभःपापस्थानेतत्रफलमाह । योगद्वयेशुभपापमिश्रणेसतिसमाःराजसमाइत्यर्थः ॥ ३३ ॥

## दरिद्राविपरीते ॥ ३४ ॥

शुभस्थानेपापाएवपापस्थानेशुभाएवतर्हिदरिद्राभवंति ॥ ३४ ॥

## मातरिगुरौशुक्रेचंद्रेवाराजकीयाः ॥ ३५ ॥

लग्नाधिपात्सप्तमाधिपाच्चपंचमेगुर्वाद्यन्यतमेसतिराजकीयाराजाधिकारवंतोभवंति ॥ ३५ ॥

**कर्मणिदासेवापापेसेनान्यः ॥ ३६ ॥**

लग्नसप्तमाभ्यांतृतीयेषष्ठेवापापेसतिसेनाधिपतयोभवंति॥ ३६॥

**स्वपितृभ्यांकर्मदासस्थदृष्ट्यातदीशदृष्ट्यामातृनाथदृष्ट्याचधीमंतः ॥ ३७ ॥**

अथबुद्धियोगमाह । आत्मकारकाल्लग्नाच्चतृतीयषष्ठगतग्रहदृष्ट्याकारकेलग्नेचेत्यर्थः। तथातृतीयषष्ठेशदृष्ट्यातथापंचमेशदृष्ट्यालग्नकारकयोर्धीमंतोभवंति ॥ ३७ ॥

**दारेशदृष्ट्यासुखिनः ॥ ३८ ॥**

• कारकाल्लग्नाद्वाचतुर्थेशदृष्ट्यालग्नकारकयोःसुखिनोभवंति ॥ ३८ ॥

**रोगेशदृष्ट्यादरिद्राः ॥ ३९ ॥**

कारकलग्नाभ्यामष्टमेशस्यकारकलग्नयोर्दृष्ट्यादरिद्राभवंति ॥ ३९ ॥

**रिपुनाथदृष्ट्याव्ययशीलाः ॥ ४० ॥**

कारकलग्नाभ्यां द्वादशेशस्य लग्नकारकयोर्दृष्ट्याव्ययस्वभावा भवंति ॥ ४० ॥

**स्वामिदृष्ट्याप्रबलाः ॥ ४१ ॥**

लग्नेलग्नेशदृष्ट्याकारकेकारकाश्रयराशिदृष्ट्याबलवंतोभवंति ॥४१॥

**पश्चाद्रिपुभाग्ययोर्ग्रहसाम्यंबंधः कोणयोरिपुजाययोःकीटयुग्मयोर्दाररिष्फयोश्च ॥ ४२ ॥**

अथापद्योगानाह।पश्चाल्लग्नात्द्विद्वादशयोःपंचमनवमयोः द्वादशषष्ठयोरेकादशतृतीययोश्चतुर्थदशमयोर्वाग्रहसाम्येएकश्चेदेकःद्वौचेत्द्वौत्रयश्चेत्त्रयइतिरीत्याखेटसाम्येसतिबंधःकारापतनंभवतिअत्रपाठितेपुद्वाद्विकेरे पुनसमुच्चयानियमइतिवाच्यम्एवमृक्षाणांतदीशानांचशुभसंबंधेनिरोधमात्रंपापसंबंधाच्छृंखलामहारादयः ऋक्षाणांद्विद्वादशादिद्विकानांपूर्वोक्तरीत्याशुभसंबंधेसतिद्वितीयद्वादशयोरित्यादिद्विकयोरन्यतरयोगघटकत

याशुभसंबंधश्चेन्निरोधमात्रम् नतुपीडापापसंबंधः केवलपापसंबंधाच्छृं खलादयोभवंति द्विद्वादशादिपुशुभसंबंधाभावेपिद्वादशेशादिपुशुभसंबं धेसतिनिरोधमात्रंपापसंबंधेतुशृंखलादयोभवंतीत्यर्थः ॥ ४२ ॥

## शुक्राद्गौणपदस्थोराहुःसूर्यदृष्टोनेत्रहा ॥ ४३ ॥

अथनेत्रभंगयोगमाह । शुक्राल्लग्नाद्गौणपदस्थः पंचमराश्यारूढस्थोरा हुःसूर्येणदृष्टश्चेन्नेत्रनाशकरःस्यात् ॥ ४३ ॥

## स्वदारगयोःशुक्रचंद्रयोरातोद्यंराजचिन्हानिच ॥ ४४ ॥

स्वस्मादात्मकारकाच्चतुर्थगयोःशुक्रचंद्रयोः सतोःआतोद्यंवाद्यविशेषो राजाचिन्हानियताकादीनिचस्युः ॥ ४४ ॥

## इति प्रथमाध्यायस्य तृतीयःपादः ॥ ३ ॥

इतिजैमिनीयसूत्रव्याख्यायांसुबोधिन्यांप्रथमाध्यायस्यतृतीयपादः ३

## उपपदंपदंपित्रनुचरात् ॥ १ ॥

अथोपपदादिकमवलंब्यफलमादिशति तत्रादावुपपदंलक्षयति । ल ग्नानुचरात्पदंलग्नात्द्वादशस्यराशेर्यत्पदंतदुपपदमित्यर्थः । ननुपित्रनुच रपदेनद्वादशस्यबोधः कथमितिचेत् । उच्यते । पितृलग्नमनुचरंद्वितीयं यस्येतिव्युत्पत्त्यागृहाण । यत्तुपित्रनुचरादितिपाठंस्वीकृत्याखंडारससं ख्यालाभात्ससमात्पदमुपपदंमितिपंचैरुक्तम् तदयुक्तम् । एवंचेल्लाघवात् उपपदंपदंलाभादितिसूत्रंप्रणीतंस्यादित्यलम् ॥ १ ॥

## तत्रपापस्यपापयोगेप्रव्रज्यादारनाशोवा ॥ २ ॥

तत्रफलमाह । पापस्यतत्रपापस्रामिकेतस्मिन्नुपपदद्वितीयेपापयोगे सतिप्रव्रज्यासंन्यासः स्त्रीनाशोवास्यात् यथाकारकाधिकारपदाधिका रयोस्तत्रेतिपदेनकारकेपदेइत्यर्थोभवति तथात्रोपपदेइतिकुतोनोक्तमि तिचेत्सत्यंतत्रोभयत्राधिकारःस्थितः अत्रनास्तीतितत्रपदेनद्विसंख्या लाभादुपपदद्वितीयेइत्युक्तम् अनुभवसिद्धत्वाच्चेति । तदुक्तंवृद्धैः "आ रूढात्पष्टभेपापेचोरःस्याच्छुभवर्जिते॥आरूढाद्वापिसौम्येतुसर्वदिक्पधि

पाभेवत्॥सवज्ञस्तत्रजीवेस्यात्कविर्वादेच्चभार्गवे"इति। आरूढादुपपदात् आरूढपदेनचेदारूढंगृह्यतेतर्हिपदाधिकारएवोक्तस्यात्रत्वत्रेतिनचोपप दादितिवक्तव्येआरूढादितिकथमुक्तमितिवाच्यम् ॥ २ ॥

## उपपदस्याप्यारूढत्वादेवनात्ररविःपापः ॥ ३ ॥

अत्रविपयेरविःपापत्वेननग्राह्यः तेनसिंहेऽउपपदाद्वितीयेमेपादिपाप राशौरवौवासतिनेदंफलमित्यर्थः ॥ ३ ॥

## शुभदृग्योगात्र ॥ ४ ॥

उपपदाद्वितीयेशुभदृष्टियोगाभ्यामुक्तयोगेसत्यपिनेदंफलंभवति ॥४॥

## नीचेदारनाशः ॥ ५ ॥

उपपदाद्वितीयेनीचग्रहांशकेनीचग्रहाधिष्ठितेवासतिदारनाशोभवति५

## उच्चेबहुदारः ॥ ६ ॥

उपपदाद्वितीयेउच्चेशउच्चग्रहाधिष्ठितेवासतिबहुदारःस्यात् ॥ ६ ॥

## युग्मेच ॥ ७ ॥

उपपदाद्वितीयेमिथुनेसतिबहुदारःस्यात् ॥ ७ ॥

## तत्रस्वामियुक्तेस्वर्क्षेवातद्धेतावुत्तरायुषिनिर्दारः ॥ ८ ॥

दारनाशयोगेविलंबकरयोगमाह।तत्रोपपदाद्वितीयेस्वामिनायुक्तेउत्तरा युषिनिर्दारःस्यात् । तच्छब्देनपूर्वपरामर्शः तद्धेतौतस्योपपदाद्वितीय स्यहेतुः स्वामीतस्मिन्स्वर्क्षेस्वराशौसतिचोत्तरायुषिनिर्दारःस्यात् । रा शेःकारणीभूतोग्रहएवतस्मात्स्वामिनः स्वगृहयोगोऽपेक्षितः । ननुस्वा म्यादिभिस्तच्छब्देनदारकारकग्रहणात्त्वयेदंकथमुक्तमितिचेच्छृणु । आ दौदारकारकग्रहणाभावात्तच्छब्देनदारकारकग्रहणानौचित्यात् पूर्वदा रनाशपदेनदारकारकबोधाभावाच्च।ननुरविचंद्रयोरेकगृहत्वात्स्वर्क्षेतद्धेता वित्यंशस्यसंभवेनेतिचेन्मास्त्वस्माकंकाक्षातिरिति ॥ ८ ॥

## उच्चेतस्मिन्नुत्तमकुलाद्दारलाभः ॥ ९ ॥

तस्मिन्नुपपदाद्वितीयस्वामिनिउच्चराशौस्थितेसत्युत्तमकुलाद्दारला भःस्यात् ॥ ९ ॥

नीचेविपर्ययः ॥ १० ॥

तस्मिन्नुपपदद्वितीयस्थाभिनिनीचराशिस्थितेसतिअनुत्तमकुलाद्दार लाभःस्यात् ॥ १० ॥

शुभसंबंधात्सुंदरी ॥ ११ ॥

उपपदद्वितीयशुभवर्गदृष्टियोगेसतिस्त्रीसुंदरीभवति ॥ ११ ॥

राहुशनिभ्यामपवादात्त्यागोनाशोवा ॥ १२ ॥

उपपदद्वितीयेराहुशनिभ्यांयोगेसतिलोकापवादात्स्त्रियस्त्यागोनाशो वास्यात् ॥ १२ ॥

शुक्रकेतुभ्यांरक्तप्रदरः ॥ १३ ॥

उपपदद्वितीयेशुक्रकेतुयोगेसतिरक्तप्रदररोगवतीस्त्रीस्यात् ॥ १३ ॥

अस्थिस्रावोबुधकेतुभ्याम् ॥ १४ ॥

उपपदद्वितीयेबुधकेतुभ्यांयोगेअस्थिस्रावरोगवतीस्त्रीस्यात् ॥ १४ ॥

शनिरविराहुभिरस्थिज्वरः ॥ १५ ॥

उपपदद्वितीयेशन्यादित्रिकयोगेऽस्थिज्वरवतीस्यात् ॥ १५ ॥

बुधकेतुभ्यांस्थौल्यम् ॥ १६ ॥

उपपदद्वितीयेबुधकेतुभ्यांयोगेस्थूलास्त्रीस्यात् ॥ १६ ॥

बुधक्षेत्रेमंदाराभ्यांनासिकारोगः ॥ १७ ॥

बुधगृहेभौमगृहेवोपपदद्वितीयगतेसतिशनिभौमाभ्यांयोगेनासिकारो गवतीस्यात् ॥ १७ ॥

कुजक्षेत्रेच ॥ १८ ॥ गुरुशनिभ्यांकर्ण रोगोनरहकाच ॥ १९ ॥

बुधकुजान्यतरक्षेत्रगे उपपदद्वितीयगेसतितत्रगुरुशनियोगे कर्णरोगवती नरहकानाडिकानिःसरणरोगवतीचस्यात् ॥ १८ ॥ १९ ॥

## गुरुराहुभ्यांदंतरोगः ॥ २० ॥

बुधकुजान्यतरक्षेत्रगेउपपदद्वितीयेगुरुराहुभ्यांयोगेदंतरोगवती स्यात् ॥ २० ॥

## शनिराहुभ्यांकन्यातुलयोःपंगुर्वातरोगोवा ॥ २१ ॥

कन्यातुलान्यतरगेउपपदद्वितीयेशनिराहुभ्यांयोगेपंगुर्वातरोगवती वास्यात् ॥ २१ ॥

## शुभदृग्योगान्न ॥ २२ ॥

यद्युपपदद्वितीयेशुभयोगोदृष्टिर्वास्यात्तर्हिनिरुक्तादोषानस्युः॥२२॥

## सप्तमांशग्रहेभ्यश्चैवम् ॥ २३ ॥

उपपदाद्यःसप्तमोभावस्तद्भावस्थनवांशश्चताभ्यांतयोःस्वामिनौग्रहौ ताभ्यांचद्वितीये एवंपूर्वोक्तानिफलानिसमुन्नेयानितदुक्तंवृद्धैः“ सप्तमे शात्द्वितीयस्थेप्येवंफलमुदाहृतमि”ति ॥ २३ ॥

## बुधशनिशुक्रेचानपत्यः ॥ २४ ॥

उपपदात्सप्तमांशग्रहेषुबुधशनिशुक्रयोगेसत्यपत्यहीनोभवति॥२४॥

## पुत्रेपुरविराहुगुरुभिर्बहुपुत्रः ॥ २५ ॥

उपपदात्सप्तमांशग्रहेभ्यः पंचस्थानेषु रव्यादिषु सत्सु बहुपुत्रः स्यात् ॥ २५ ॥

## चंद्रेणैकपुत्रः ॥ २६ ॥

सप्तमांशग्रहेभ्यःपंचस्थानेषुचंद्रेसतिएकपुत्रःस्यात् ॥ २६ ॥

## मिश्रेविलंबात्पुत्रः ॥ २७ ॥

उपपदात्सप्तमांशग्रहेभ्यःपंचमस्थानेषुअनपत्यत्वबहुपुत्रत्वादिग्रहमिश्रेणसतिविलंबात्पुत्रलाभःस्यात् ॥ २७ ॥

## कुजशनिभ्यांदत्तपुत्रः ॥ २८ ॥

उपपदात्सप्तमांशग्रहेभ्यःपंचमेपुकुजशनिभ्यांस्थिताभ्यांदत्तपुत्रवान्स्यात् ॥ २८ ॥

## ओजेबहुपुत्रः ॥ २९ ॥

उपपदात्सप्तमांशग्रहेभ्यः पंचमेपुओजराशौसतिबहुपुत्रःस्यात् ।२९।

## युग्मेल्पप्रजः ॥ ३० ॥

उक्तस्थानेयुग्मराशौसत्यल्पापत्योभवति ॥ ३० ॥

## गृहक्रमात्कुक्षितदीशपंचमांशग्रहेभ्यश्चैवम् ॥ ३१॥

गृहक्रमाज्जन्मलग्नक्रमात् यथाभावानांविचारःक्रियते तथाकुक्षितदीशादिभ्योपिकुर्यात् कुक्षितदीशावुपपदोपपदेशौताभ्यांपंचमांशग्रहाः पंचमभावस्तद्भावस्थनवांशश्चताभ्यांतयोःस्वामिग्रहाभ्यांचैवपूर्वोक्तफलविचारःकार्यइत्यर्थः । तस्माद्यत्रयस्यसंभवस्तस्याग्रिमसूत्रेनुवृत्तिः कार्याभ्रातृभ्यामित्यादिसूत्रेपूपपदोपपदेशाभ्यांविचारःकार्यइति । कुक्षिपदेनप्रकरणपठितोपपदस्यग्रहणं । ननुस्वाम्यादिभिः कुक्षितदीशाविति चिद्रवीरयुक्तंतत्सर्वसाधारण्यादनुपयुक्तंविशेषतोऽस्मिञ्शास्त्रेऽक्षरगम्यांकानामेवग्रहणादिति ॥ ३१ ॥

## भ्रातृभ्यांशनिराहुभ्यांभ्रातृनाशः ॥ ३२ ॥

— उपपदोपपदेशाभ्यांभ्रातृस्थाभ्यामेकादशतृतीयस्थाभ्यांशनिराहुभ्यांभ्रातृनाशः एकादशेज्येष्ठस्यतृतीयेकनिष्ठस्यनाशः कर्मादिभिर्भ्रातुर्व्ययादित्यैष्ठस्येतिसूत्रदर्शनात् । ननुउपपदोपपदेशाभ्यामितिकुतःसमागतमितिचेच्छृणु गृहक्रमादितिसूत्रात्कुक्षितदीशपदात् । नचसमासपतितपदानामेकांशानुवृत्तेरसंभवादितिवाच्यम् । अन्यपदेभ्योभ्रातृविचारायोग्यत्वादेकांशानुवृत्तेरितिभावः ॥ ३२ ॥

## शुक्रेणव्यवहितेगर्भनाशः ॥ ३३ ॥

एकादशतृतीयान्यतरस्थेनशुक्रेणयथाक्रमंव्यवहितपूर्वापरमातृगर्भ नाशःस्यात् ॥ ३३ ॥

## पितृभावेशुक्रदृष्टेपि ॥ ३४ ॥

लग्नेलआदष्टेमेवाशुक्रदृष्टेसत्यपिव्यवहितगर्भनाशइत्यर्थः ॥ ३४ ॥

## कुजगुरुचंद्रबुधैर्बहुभ्रातरः ॥ ३५ ॥

उपपदोपपदेशाभ्यां तृतीयैकादशस्थैः कुजादिभिर्भ्रातृबाहुल्यं स्यात् ॥३५ ॥

## शन्याराभ्यांदृष्टेयथास्वंभ्रातृनाशः ॥ ३६ ॥

उपपदोपपदेशाभ्यांतृतीयैकादशयोःशन्यारदृष्टेसत्यांयथास्वंभ्रातृ स्थानमनतिक्रम्यतृतीयेदृष्टेकनिष्ठस्यैकादशेदृष्टेज्येष्ठस्योभयत्रदृष्टावुभ योश्चनाशःस्यात् ॥ ३६ ॥

## शनिनास्वमात्रशेषश्च ॥ ३७ ॥

उपपदोपपदेशाभ्यांतृतीयैकादशयोःशनिदृष्टेसत्यांकेवलंस्वमात्रशे षःस्यादन्येनश्यंतीत्यर्थः ॥ ३७ ॥

## केतौभगिनीबाहुल्यम् ॥ ३८ ॥

उपपदोपपदेशाभ्यांतृतीयैकादशयोः केतौसतिभगिन्योयथास्वंभूय स्योभवंति ॥ ३८ ॥

## लाभेशाद्भाग्यभेराहौदंष्ट्रावान् ॥ ३९ ॥

उपपदसप्तमेशाद्द्वितीयपराशौराहौसतिस्थूलदंष्ट्रावान्स्यात् ।तदुक्तं प्राच्यैः "सप्तमेशाद्द्वितीयस्थेराहौमूकःस्वठेस्थिते । अदंतोधिकदंतोवा दंष्ट्रायुक्तोथवाभवेत् ॥पवनव्याधिमान्केतौयद्वास्यादस्फुटोक्तिमान् ।तत्र नानाग्रहैर्योगेमिश्रंफलमुदाहृतम्" ॥इति ॥ ३९ ॥

## केतौस्तब्धवाक् ॥ ४० ॥

उपपदसप्तमेशात्द्वितीयेकेतौसतिस्तब्धवागस्फुटोक्तिमान्स्यात् ४०

## मंदेकुरूपः ॥ ४१ ॥

उपपदसप्तमेशात्द्वितीयेशनौसतिकुरूपोभवति ॥ ४१ ॥

## स्वांशवशाद्गौरनीलपीतादिवर्णाः ॥ ४२ ॥

आत्मकारकाश्रितनवांशस्वभावाज्जातकांतरप्रसिद्धाजातकवर्णा ग्राह्याःएवंचतत्तत्कारकांशतस्तेषांतेषांवर्णाज्ञेयाइत्यपिबोध्यम् ॥ ४२ ॥

## अमात्यानुचराद्देवताभक्तिः ॥ ४३ ॥

अमात्यग्रहान्न्यूनोयोग्रहस्तस्माद्देवताभक्तिर्विचारणीया ।अमात्यानुचरोदेवताकारकस्तस्यपापत्वेक्रूरदेवतायां शुभत्वेसौम्यदेवतायां उच्चगत्वेस्वर्क्षगतत्वेचभक्तिदृढतानीचगत्वेभक्त्यस्थैर्यमित्यादिकंज्ञेयम् ४३॥

## स्वांशेकेवलपापसंबंधेपरजातः ॥ ४४ ॥

कारकांशेशुभग्रहरहितंकेवलपापसंबंधेजारजातोभवतिसंबंधस्तुदृष्टियोगषड्वर्गैःज्ञेयः ॥ ४४ ॥

## नात्रपापात् ॥ ४५ ॥

अत्रकारकश्चेत्पापोभवतितदात्विदंफलंनस्यात् कारकातिरिक्तादेव पापसंबंधादिफलंवाच्यं नकारकात्पापादित्यर्थः । अथवाऽत्राष्टमेपापग्रहेसतिनायंयोगः ॥ ४५ ॥

## शनिराहुभ्यांप्रसिद्धिः ॥ ४६ ॥

शनिराहूयदियोगघटकौ शनिराहुदृष्टियोगषड्वर्गैः परजातत्वप्रसिद्धिर्भवति ॥ ४६ ॥

## गोपनमन्येभ्यः ॥ ४७ ॥

अन्येभ्यःपापग्रहेभ्योयोगेसतिपरजातत्वगोपनंभवति ॥ ४७ ॥

## शुभवर्गोपवादमात्रम् ॥ ४८ ॥

पापग्रहेषुयोगघटकेषुसत्सुकारकांशेशुभषड्गर्गसंबंधेसातितुपरजातत्वापवादएवभवेन्नतुपरजातत्वमित्यर्थः ॥ ४८ ॥

## द्विग्रहेकुलमुख्यः ॥ ४९ ॥

कारकांशेद्विग्रहयोगेसतिकुलमुख्योभवति ॥ ४९ ॥

## इतिप्रथमाध्यायस्यचतुर्थःपादः ॥ ४ ॥

इतिश्रीनीलकंठज्योतिर्विद्विरचितायांजैमिनार्थसूत्रव्याख्यायांसुबोधिन्यांप्रथमाध्यायस्यचतुर्थःपादःसमाप्तः ॥ ४ ॥

इति प्रथमाऽध्यायः ॥ १ ॥

---

## आयुःपितृदिनेशाभ्याम् ॥ १ ॥

अथायुर्दायोपायंदर्शयति।लग्नेशाष्टमेशाभ्यामायुर्विचार्यमित्यर्थः ॥ १ ॥

## प्रथमयोरुत्तरयोर्वादीर्घम् ॥ २ ॥

लग्नेशाष्टमेशस्थितिवशतोदीर्घायुर्योगमाह । प्रथमयोश्चरयोरुत्तरयोः स्थिरद्विस्वभावयोर्वायदिलग्नेशाष्टमेशौभवतस्तर्हिदीर्घमायुर्भवति । अयमर्थः । यत्रक्वापिचरराश्योर्लग्नेशाष्टमेशयोः स्थित्यादीर्घायुर्योगः स्थिरद्विस्वभावयोः लग्नेशाष्टमेशयोः स्थित्यावा स्थिरेलग्नेशेसतिद्वंद्वेऽष्टमेशः द्वंद्वेलग्नेशेसतिस्थिरेऽष्टमेशइतिं पर्यायेणभवतस्तदापिदीर्घायुर्योगःस्यादिति। अत्रैकस्मिन्नेवचरादौतदुभयसत्त्वेएकस्यैवतदुभयस्वामित्वेवानयोगहानिः ॥ २ ॥

## प्रथमद्वितीययोरंत्ययोर्वामध्यम् ॥ ३ ॥

अथमध्यायुर्योगंदर्शयति । प्रथमद्वितीययोश्चरस्थिरयोश्चरेलग्नेशः स्थिरेऽष्टमेशश्चरेऽष्टमेशेस्थिरेलग्नेशइतिरीत्यायादिभवतः यदिवाद्विस्वभावयोर्द्वावपिलग्नेशाष्टमेशौयत्रक्वापिभवतस्तर्हिमध्यायुर्भवतीत्यर्थः ॥ ३ ॥

## मध्ययोराद्यंतयोर्वाहीनम् ॥ ४ ॥

अथाल्पायुर्योगमाह। यदिमध्ययोःस्थिरयोर्यत्रकापिलग्नेशाष्टमेशौस्तः यदिवाआद्यंतयोश्चरद्विस्वभावयोर्लग्नेशाष्टमेशौस्तस्तर्हिहीनमल्पायुर्भवतीत्यर्थः । अथयथालग्नेशाष्टमेशयोराशिस्थितिभेदेनदीर्घमध्याल्पायूंषिप्रोक्तानितथैवलग्नचंद्राभ्यामप्युच्यंते ॥ ४ ॥

## एवंमंदचंद्राभ्याम् ॥ ५ ॥

मंदचंद्राभ्यांलग्नेंदुभ्यामेवंपूर्वोक्तप्रकारेणदीर्घमध्याल्पायूंपिविचार्याणीत्यर्थः ॥ ५ ॥

## पितृकालतश्च ॥ ६ ॥

| | | |
|---|---|---|
| १ दीर्घं १ | १ मध्य २ | १ अल्प ३ |
| २ दीर्घं ३ | २ मध्य १ | २ अल्प २ |
| ३ दीर्घं २ | ३ मध्य ३ | ३ अल्प १ |

जन्मलग्नहोरालग्नाभ्यांचपूर्वोक्तप्रकारेणदीर्घमध्याल्पायूंषिसमानेयानि । तथाच त्रिविधद्वंद्वेनदीर्घमध्याल्पायूंषित्रेधासमानेयानीतिपर्यवसितोर्थः।होरालग्नानयनंतुपूर्वमेवोक्तम् । एतदुक्तंवृद्धैः "लग्नेशरंध्रपत्योश्चलग्नेंद्वोर्लग्नहोरयोः॥सूत्राण्येवंप्रयुंजीयात्संवादादायुषांत्रये॥चरेचरस्थिरद्वंद्वाःस्थिरेद्वंद्वचरस्थिराः॥ द्वंद्वस्थिरोभयचरादीर्घमध्याल्पकायुषः "प्रथमयोरित्यादिसूत्रत्रयसंग्राहकश्चरइति प्रस्तारश्लोकः । प्रस्तारश्चकेद्रष्टव्यः ॥ ६ ॥

## संवादात्प्रामाण्यम् ॥ ७ ॥

अथत्रिविधेष्वायुर्दायानिर्णयोपायेषुत्रयाणामेकाकारायुःप्रदत्वेनिर्विवादमेवद्वयोरेकाकारायुःप्रदत्वेऽपरस्यभिन्नायुःप्रदत्वेनिर्णयमाह प्रकारद्वयेनयादृशमायुरायाति तदेवग्राह्यंनत्वेकेनागतमिति ॥ ७ ॥

## विसंवादेपितृकालतः ॥ ८ ॥

अथत्रयाणांपक्षाणांवैरूप्येग्राह्यपक्षमाह । त्रयाणामपिपक्षाणांविसंवादेवैरूप्येसति जन्मलग्नहोरालग्नाभ्यामागतमायुर्ग्राह्यमित्यर्थः ॥८॥

## पितृलाभगेचंद्रेचंद्रमंदाभ्याम् ॥ ९ ॥

सर्वत्रैवाविसंवादेलग्नहोराभ्यामेवायुःप्राप्तावपवादमाह । लग्नेसप्तमे वाचंद्रेस्थितेसतिचंद्रलग्नाभ्यामागतमायुर्ग्राह्यमित्यर्थः । अल्पायुष्या दिकंवृद्धैरुक्तम् "द्वात्रिंशात्पूर्वमल्पायुर्मध्यमायुस्ततोभवेत् ॥चतुः षष्ट्याःपुरस्तात्तुततोदीर्घमुदाहृतमि"ति द्वात्रिंशच्चतुष्षष्टिषण्णवति रूपेष्वागतेष्वायुर्दायेपुस्पष्टीकरणंवृद्धैरुक्तम् "पूर्णमादौहानिरंतेऽनुपा तोमध्यतोभवेत्॥राशिद्वयस्ययोगार्द्धंवर्षाणांस्पष्टमुच्यते॥एवंद्विकानांसं वित्त्यत्रयाणांसूत्रवर्त्मने"ति अयमर्थः।प्रथमयोरित्यादिसूत्रजालेनायुर्य न्निर्णीतं तत्रदीर्घायुषिसमागतेमध्यमायुरवाधिपर्यंतंनिर्विशंकंसिद्धमेव त दुपरितनेदीर्घायुःखंडेद्वात्रिंशदब्दरूपे कियद्ग्राह्यमिति संशयनिराकर णायायंश्लोकःपितृदिनेशौद्वावपियद्राशौभवतस्तद्राशेरारंभेतौचेत्तर्हितत्रो चितःखंडःपूर्णएवतद्राश्यंतेयदितौभवतस्तर्हितत्खंडस्यविनाशएव म ध्येत्वनुपातेनखंडैकदेशोग्राह्यः अनुपातस्त्वत्यंत्रिंशदंशैश्चेत्द्वात्रिंशद्व र्षाणितर्ह्येकेनांशेनकिमिति $\frac{1}{32}$ प्राप्तं $\frac{1}{0}$ तत्रलग्नेशाष्टमेशयोःपृथक्स्प ष्टम्एवंविधराशीन्दूरीकृत्यांशादेरेकखंडस्यत्रैराशिकेनयदायातिलग्नेश स्याष्टमेश ३०० स्यच २४ ॥तयोरागतयोर्वर्षादिपिंडयोर्योगंविधायत द्योगार्द्धंस्पष्टंभवति तच्चयदिदीर्घायुःसंबंधितर्हिचतुःषष्टिमध्येयोज्य म् यदिमध्यायुःसंबंधितदाद्वात्रिंशन्मध्येयोज्यम् यद्यल्पायुःसंबंधित दाप्रथमखंडाभावात्स्वयमेवजन्मप्रभृतिवर्तमानमायुर्भवति एवं मंद चंद्रयोःपितृकालयोरपिसमागतायुष्यंतिमखंडस्पष्टीकरणंविज्ञेयम् अन्ये तु "होरालग्नादिमांशेतुपूर्णमंतेनकिंचन ॥ स्पष्टीकरणमेतत्स्याद्दीर्घम ध्याल्पकायुषि" अनुपातस्तुपूर्ववत् अनेनहोरालग्नस्यापिसावयवत्वंप्र दर्शितम् ॥ ९ ॥

## शनौयोगहेतौकक्ष्याह्रासः ॥ १० ॥

अथदीर्घमध्याल्पायुर्योगेषुकंचनविशेषंदर्शयति यद्यत्रशनियोगकर्ता स्यात्तदाकक्ष्याह्रासोभवति दीर्घंचेन्मध्यंमध्यंमध्यंचेदल्पमल्पमल्पं चेन्नकिंचनेति ॥ १० ॥

## विपरीतमित्यन्ये ॥ ११ ॥

मतांतरमाहशनौयोगकर्तरिविपरीतंन्हासोभवति किंतु यथास्थित एवेत्यन्येआचार्यावदंति ॥ ११ ॥

## सूत्राभ्यांनस्वर्क्षतुंगगेसौरे ॥ १२ ॥
## केवलपापदृग्योगिनिच ॥ १३ ॥

परपक्षंनिर्दिश्यस्वपक्षमाह । स्वराशिस्वोच्चगेशनौतथाशुभदृग्योगर हितकेवलपापदृष्टियोगविशिष्टेशनौचनकक्ष्यान्हासः अन्यथातुन्हासो भवत्येव ॥ १२ ॥ १३ ॥

## पितृलाभगेगुरौकेवलशुभदृग्योगिनिचकक्ष्यावृद्धिः १४॥

अत्रान्याचार्यमतमेवानुभवसिद्धमिति सर्वमतसिद्धांतकक्ष्यावृद्धिं योगांतरेणोपदिशति ॥ लग्नसप्तमयोर्गुरौसतितथापापदृष्टिपापयोगरहि तशुभदृष्टिशुभयोगसहितेगुरौचकक्ष्यावृद्धिरित्यर्थः । तथाचानायुषोल्पा युर्वृद्धिः अल्पायुषोमध्यायुर्वृद्धिः मध्यायुषोदीर्घायुर्वृद्धिः दीर्घायुषः पण्णवत्यूर्ध्वमायुर्भवतीत्यर्थः ॥ १४ ॥

## मलिनेद्वारबाह्येनवांशेनिधनंद्वारद्वारेशयोश्चमालिन्ये १५

आयुषिप्रमाणसिद्धेपूर्णमरणमंतरापिमरणंभवतीत्याकांक्षायामाह ॥ द्वारंबाह्यंचेतिसमाहारद्वंद्वः दशाश्रयोद्वारंततस्तावतिथंबाह्यमित्यग्रे वक्ष्यति तस्मिन्पाकभोगापरपर्यायेद्वारबाह्येमलिने स्वयंपापेपापयुक्ते पापदृष्टेचसतिद्वारबाह्ययोर्नवांशेनवांशदशायांनिधनंभवति अत्रनवांश पदेनप्रतिराशिनवांशमितानवाब्दाग्राह्याः विषमेतदादिर्नवांशइत्यादि नावक्ष्यमाणानवांशदशेतिजन्मकालेआद्यदशाश्रयराशेर्यावत्संख्याकोध रराशिस्तस्मात्तावत्संख्याकोराशिर्बाह्यमुच्यते द्वारबाह्ययोर्द्वयोरपिम लिनत्वएवनिधनंनत्वन्यतरस्य एवंद्वारराशेर्द्वारेशस्यचमालिन्येसतिद्वा रतदीशाश्रयराशिनवांशदशायांनिधनंभवतीत्यर्थः ॥ १५ ॥

२-४-१६ शुभदृग्योगान्न ॥ १६ ॥

निधनयोगापवादमाह । द्वारबाह्यद्वारेशानांशुभदृष्टिशुभयोगसत्त्वेद्वार बाह्यद्वारेशाश्रयनवांशदशायांनिधनंनेत्यर्थः ॥ १६ ॥

२-४-१७ रोगेशेतुंगेनवांशवृद्धिः ॥ १७ ॥

अथशुभदृग्योगाभावेपिनवांशकालनिधनापवादमाह । जन्मलग्नादष्टमेशेउच्चंगतेसत्युक्तनिधनयोगसत्यपिदशायांमरणमुक्तम् । तदुत्तरंनवांशवृद्धिः नवाब्दवृद्धिरित्यर्थः ॥ १७ ॥

तत्रापिपदेशदशांतेपदनवांशदशायांपितृदिनेशत्रि
२-४-१८ कोणेवा ॥ १८ ॥

ननुराशिवृद्धौसत्यांकुत्रराशौनिधनमितिशंकायामाह । तत्रापि वृद्धिपक्षेपिपदस्यलग्नारूढस्येशः स्वामी तदाश्रयीभूतराशेर्दशायामंतेनिधनंस्यात्अथवा जन्मलग्नारूढनवांशदशायांनिधनंस्यात् किंवालग्नेशाष्टमेशाभ्यांत्रिकोणेलग्नपंचमनवमान्यतरराशिदशायामंतर्दशायांवानिधनंभवतीत्यर्थः ॥ १८ ॥ २-४-१९

पितृलाभरोगेशेप्राणिनिकंटकादिस्थेस्वतश्चैवंत्रिधा १९

अथप्रकारांतरेणदीर्घादियोगत्रयमाह । लग्नसप्तमाच्चयावष्टमेशौतयोर्यःप्राणीवलीतस्मिन्कंटकादिस्थेलग्नादिकेन्द्रपणफरापोक्लिमस्थेत्रिधायोगोभवति लग्नादिकेन्द्रगेतस्मिन्दीर्घायुर्योगःपणफरस्थेमध्यायुःआपोक्लिमस्थेत्वल्पायुरित्यर्थः।एवंस्वतश्चकारकादपियोगत्रयमिदंबोध्यम्। तथाचकारकात्तत्सप्तमाच्चयावष्टमेशौतयोर्यांवलीतस्मिन्कारककेंद्रादिस्थेदीर्घमध्याल्पायुर्योगाभवंतीत्यर्थः। अथैतद्योगानामपवादमाह ॥ १९ ॥

४-२० योगात्समेस्वस्मिन्विपरीतम् ॥ २० ॥

योगाज्जन्मलग्नसप्तमात्सप्तमेनवमेस्वस्मिन्कारकेसतिविपरीतंपितृलाभेत्यादिसूत्रोपदिष्टयोगानस्युःकिंतुदीर्घंचेन्मध्यंमध्यंचेदल्पमल्पंचेन्नोंक

चिदित्यर्थः।वैपरीत्यंतुदीर्घंचेदल्पमल्पंचेद्दीर्घमध्यंचेन्मध्यमेवेतितुसंप्रदायविदः । आयुर्दायविषयेविशेषमाहुर्वृद्धाः "एकोष्टमेशः स्वोच्चस्थः पर्यायार्द्धंप्रयच्छाति।नीचस्थोनाशयेत्पर्यायार्द्धमायुषिनिश्चिते । नीचरंध्रेशसंयुक्ताःपर्यायार्द्धंपृथक्पृथक् ॥ गृहाविनाशयंत्येवंनिर्णीतेपरमायुषि॥उच्चरंध्रेशसंयुक्तग्रहैः प्रत्येकमुन्नयेत्॥एकैकमर्द्धपर्यायंपरमायुषि निश्चिते"अयमर्थः।आयुः पितृदिनेशाभ्यामित्यनेनाष्टमेशउच्चस्थश्चेत्स्व पर्यायार्द्धंस्वदशार्द्धमधिकंददाति नाथांताइतिरीत्यायावदायुरायाति तस्मिन्पुनरपितदर्धमधिकंयोजनीयमितियावत् । अष्टमेशोनीचराशिगश्चेदायुष्यर्द्धंनाशयेत् एवमेवनीचाष्टमेशयुक्ताग्रहाअपिस्वदीयमानायुष्यर्द्धमर्द्धंनाशयेयुः एवमुच्चाष्टमेशसंयुक्ताग्रहाः स्वदीयमानायुषिस्वदशार्द्धमधिकंदद्युः एवमेवलग्नेशादयोपिग्रहाः उच्चनीचगुणतोवृद्धिन्हासौ कुर्युरितिसंप्रदायः ॥ २० ॥

## राशितःप्राणः ॥ २१ ॥

अस्मिन्प्रकरणेकिंबलंग्राह्यमित्याशंकायामाह । अत्रराशितोबलं ग्राह्यं कारकयोगः प्रथमोभानामित्यादिकंवक्ष्यमाणबलंग्राह्यम् अत्रांशाधिक्यबलंनग्राह्यमित्यर्थः ॥ २१ ॥

## रोगेशयोःस्वतऐक्येयोगेवामध्यम् ॥ २२ ॥

अथप्रकारांतरेणमध्यायुर्योगमाह । लग्नात्सप्तमाच्चरोगेशयोरष्टमेशयोः स्वतः कारकेणैक्येअतियोगेवासतिपितृलाभेत्यादिसूत्रेणप्राप्तदीर्घायुषामपिमध्यायुरेवभवतीत्यर्थः जातकशास्त्रांतरे लग्नस्यास्मिन्ग्रंथेकारकस्यप्राधान्यादष्टमेशयोगेनायुषोन्हासएवेतिविभावनीयम् ॥ २२ ॥

## पितृलाभयोःपापमध्यत्वेकोणपापयोगेवाकक्ष्यान्हासः ॥ २३ ॥

अथदीर्घादियोगेषुकक्ष्यान्हासमाह।पितृलाभयोर्लग्नसप्तमयोर्द्वयोरपिपापग्रहस्यमध्यवर्तित्वेकक्ष्यान्हासोभवति लग्नसप्तमयोर्द्वयोर्द्वादशयोः पद्य

ष्टमयोश्चपापयोगेसतिपापमध्यवर्तित्वंभवति । एवंलग्नसप्तमयोःकोणपापयोगेवाकोणेषुत्रिकोणेषु लग्नपंचमनवमेषु सर्वत्रपापयोगेवा कक्ष्यान्ह्रासो भवति ॥ २३ ॥

**स्वस्मिन्नप्येवम् ॥ २४ ॥**

स्वस्मिन्कारकेप्येवंलग्नकुंडलीवद्भवति । अयमर्थः । कारकराशेस्तत्सप्तमराशेश्चपापमध्यत्वेएकयोगः कारकतत्सप्तमयोस्त्रिकोणेसर्वत्रपापयोगे सतिद्वितीयोयोगः ॥ २४ ॥

**तस्मिन्पापेनीचेऽतुंगेऽशुभसंयुक्तेच ॥ २५ ॥**

कक्ष्यान्ह्रासायतस्मिन्कारकेपापेनीचेसतिकक्ष्यान्ह्रासः कारकेपापेऽतुंगेतुच्चराशौअशुभसंयुक्तेचसतिकक्ष्यान्ह्रासोभवतीतितृतीयोयोग ॥२५॥

**अन्यदन्यथा ॥ २६ ॥**

अथकक्ष्यान्ह्रासयोगेअपवादमाह । अन्यथालग्नसप्तमयोः कारकसप्तमयोर्वाशुभग्रहमध्यगतत्वेलग्नकारकाभ्यांकोणेषुशुभयोगेवाकारके शुभेऽनीचेवाकारके शुभेतुंगेशुभसंयुक्तेवा अन्यत्कक्ष्यावृद्धिरित्यर्थः । तथाचसर्वत्रयोगेपापात्मकेकक्ष्यान्ह्रासः शुभात्मकेकक्ष्यावृद्धिः शुभपापरहितनवृद्धिर्नन्हासइतिबोध्यम् ॥ २६ ॥

**गुरौच ॥ २७ ॥**

अथन्हासवृद्धिप्रकारान्गुरावपिदर्शयति । एवमित्यर्थः । गुरोर्द्विद्वादशषष्ठाष्टमत्रिकोणेषुपापयोगेसतिकक्ष्यान्ह्रासः गुरौनीचेअतुंगेऽशुभसंयुक्तेचकक्ष्यान्ह्रासः अन्यथाचेदन्यथेति प्राग्वद्योजना ॥ २७ ॥

**पूर्णेन्दुशुक्रयोरेकराशिवृद्धिः ॥ २८ ॥**

तत्रापवादंदर्शयति । उक्तस्थानेषुशुभग्रहयोगप्रकरणेपूर्णेंदुशुक्रयोर्योगेसति नकक्ष्यावृद्धिः किंत्वेकराशिवृद्धिरेवेत्यर्थः ॥ २८ ॥

**शनौविपरीतम् ॥ २९ ॥**

पापयोगेनयःकक्ष्यान्ह्रासउक्तस्तत्रापवादंदर्शयति । शनावुक्तस्थानगेसतिनकक्ष्यान्ह्रासः किंत्वेकराशिन्ह्रासएवेत्यर्थः । अत्रचंद्रशुक्रशनी

नांप्राधान्येनयोगकर्तृत्वेनग्रहांतरेपुयोगकरेष्वपिएकराशेर्वृद्धिर्ह्रासोवा स्यान्नतुकक्ष्यायाइत्यर्थः ॥ २९ ॥

## स्थिरदशायांयथाखंडंनिधनम् ॥ ३० ॥

अथसकलायुर्योगापवादत्वेनानिधनयोगंस्थिरदशामालंब्याह।खंडम नतिक्रम्ययथाखंडं स्थिरदशायांशशिनंदपावकाइति वक्ष्यमाणायांदीर्घ मध्याल्पायुर्भेदेनपूर्णायुषस्त्रेधाखंडकरणाद्यःखंडः समागतस्तस्मिन्नेव खंडेनिधनंभवतीत्यर्थः । एवंचवक्ष्यमाणप्रकारेणनिधनाश्रयखंडात्पूर्वखं डेनिधनलक्षणाक्रांतराशेर्दशायामागतायामपिननिधनंस्यात् किंतु क्ले शः स्यात् ॥ ३० ॥

## तत्रर्क्षविशेषः ॥ ३१ ॥

अथदीर्घमध्याल्पायुर्भेदेनमरणखंडेनिर्णीतेनाविशेषतामरणकालज्ञान मितःसंभवतीत्यत्राह।तत्रनिधनेऋक्षविशेषःराशिविशेषोऽस्तीत्यर्थः ३१॥

## पापमध्येपापकोणेरिपुरोगयोःपापेवा ॥ ३२ ॥

सराशिविशेषःकइत्यपेक्षायामाह।पापद्वयमध्यगतराशिदशायांप्रथम दशाप्रदराशेस्त्रिकोणेद्वादशाष्टमयोर्वापापयोगेसतितद्राशिदशायांनिधनं भवति।एतदुक्तंवृद्धैः "शुभमध्येमृतिर्नैवपापमध्येमृतिर्भवेदि" ति लग्ना त्कारकाद्वापापाक्रांतत्रिकोणदशायांपापाक्रांतद्वादशाष्टमराशिदशायां वानिधनंभवतीत्यन्ये ॥ ३२ ॥

## तदीशयोःकेवलक्षीणेन्दुशुक्रदृष्टौवा ॥ ३३ ॥

पुनरपिनिधनेराशिविशेषमाह।तदीशयोर्द्वादशाष्टमेशयोर्ग्रहांतरदृष्टि रहितकेवलक्षीणेन्दुशुक्रयोर्दृष्टौसत्यांद्वादशाष्टमराशिदशयोर्निधनंभवती त्यर्थः । बहुवर्षव्यापिन्यांदशायांकदामरणमित्याशंकायामाह ॥ ३३ ॥

## तत्राप्याद्यक्षारिनाथदृश्यनवभागाद्वा ॥ ३४ ॥

तत्रापिनिधनस्थानत्वेनादिष्टासुपापमध्यराश्यादिदशासुआद्यक्षारिना यौप्रथमदशाप्रदराशितत्पष्ठराशिनाथौ ताभ्यांदृश्योयोनवमभागो नवांश कुंडल्यांराशिस्तस्यांतर्दशायांवानिधनंभवतीत्यर्थः।ननुआद्यशब्देनदश मराशिः अरिशब्देनपष्ठराशिरितिकैश्चिद्याख्यातम् तत्रवैपम्येबीजा भावादरिशब्देनाष्टमराशिः कुतोनगृह्यतइति एवंचेन्मुनेस्तात्पर्यतर्हित त्रापिरिष्फतंतुनाथदृश्यनवभागाद्वेतिकुतोनोक्तमित्यलम् ॥ ३४ ॥

## पितृलाभभावेशप्राणीरुद्रः ॥ ३५ ॥

अथनिर्याणदशाविशेषंप्रकारान्तरेणदर्शयितुंरुद्रग्रहंलक्षयति । लग्नस समाभ्यांयावष्टमेशौतयोर्यः प्राणीबलवान्सरुद्रसंज्ञोग्रहोभवतीत्यर्थः ३५

## अप्राण्यपिपापदृष्टः ॥ ३६ ॥

द्वितीयरुद्रमाह । लग्नसप्तमाभ्यांयोष्टमाधीशोदुर्बलः सोपिपापदृष्टश्चे द्रुद्रःस्यात् तथा चद्वौरुद्रौभवतःप्राणीअप्राणीचेति ॥ ३६ ॥

## प्राणिनिशुभदृष्टेरुद्रशूलांतमायुः ॥ ३७ ॥

प्राणिरुद्रस्यफलमाह।बलवतिरुद्रेशुभदृष्टेसतिरुद्रशूलांतंरुद्रात्प्रथमपं चानवमदशांतमायुर्भवति अल्पमध्यदीर्घायुर्योगभेदात्प्रथमद्वितीयतृती येत्रिकोणांतेवाऽऽयुःसमाप्तंभवतीत्यर्थः ॥ ३७ ॥

## तत्रापिशुभयोगे ॥ ३८ ॥

अप्राणिरुद्रेविशेषमाह । तत्राद्वितीयेरुद्रेपिशुभयोगेसतिरुद्रशूलांतमा युर्भवति नतुशुभदृष्टचेतिभावः ॥ ३८ ॥

## व्यर्कपापयोगेन ॥ ३९ ॥

उक्तयोगेअपवादमाह । रविंविहायेतरपापयोगेसतिइदंफलंनभवति रवियोगेतुनास्यफलस्यभंगइति ॥ ३९ ॥

## मंदारेंदुदृष्टेशुभयोगाभावेपापयोगेपिवाशुभदृष्टौ वापरतः ॥ ४० ॥

अथरुद्रद्वयस्यगुणविशेषेणफलंदर्शयति । प्राणिन्यप्राणिनिवारुद्रेमंदारेंदुदृष्टेशुभयोगाभावेएकोयोगः मंदारेन्दुदृष्टेरुद्रद्वयेपापयोगेपिवाद्वितीयोयोगः मंदारेन्दुदृष्टेरुद्रद्वयेशुभदृष्टौवासत्यांतृतीयोयोगः प्रथमयोगेशुभयोगाभावइत्यनेनपापयोगेद्वितीययोगेवक्तव्येशुभपापराहितेरुद्रेऽयमर्थःसंपन्नः योगत्रयेसंपूर्णेसतिरुद्रशूलांतात्परतोऽग्रेआयुःसमाप्तिर्भवतीत्यर्थः । वाकारद्वयमनास्थायामित्युक्तायोगद्वयपरमितिपंथैरुक्तम् । तत्र।वाकारद्वयस्यानास्थाकल्पनायां प्रमाणाभावाद्योगत्रयपरमेववाकारद्वयेनलभ्यतइति । अस्मिन्प्रकरणेशुभपापावृद्धैरुक्ताः "अर्कारमंदफणिनःक्रमात्क्रूरायथाश्रयम् ॥ चंद्रोपिक्रूरएवात्रक्वचिदंगारकाश्रये॥गुरुध्वजकविज्ञाःस्युर्यथापूर्वंशुभग्रहः" इति।अयमर्थः।अत्रार्काद्याउत्तरोत्तरंयथाश्रयंक्रूरराशिगताःक्रूराभवंति शुभराशिगतास्तुनपापाः किंतु शुभा एव गुर्वादयस्तुशुभाः यथापूर्वंबुधात्कविःकवेःकेतुःकेतोर्गुरुरितिक्रमेणोत्तरोत्तरंशुभाः क्रूरग्रहाणांयथाक्रूराश्रयेक्रूरत्वंशुभाश्रयेशुभत्वम् तथा गुर्वादीनामपिशुभाश्रयेएवशुभता। नक्रूराश्रयेशुभता एवमेववृद्धैरप्युक्तम् "प्रत्येकंशुभराशिस्थउच्चस्थोवाबुधःशुभः ॥ गुरुशुक्रौचसौम्यस्थौततोन्यत्राशुभाःस्मृताः"इति।यदिशूलेमृतिस्तर्हिकस्मिन्शूलेस्यादित्यत्रवृद्धैर्विशेषोनिरुक्तः "पापमात्रस्यशूलत्वेप्रथमर्क्षेमृतिर्भवेत्॥मिश्रेमध्यमशूलर्क्षेशुभमात्रेंत्यभेमृतिरि"ति।अस्यार्थः।द्वौरुद्रौयदिपापौतर्हिप्रथमशूलेमृतिःस्यात् यद्येकोरुद्रः शुभोऽपरः पापस्तर्हिमध्यशूलेमृतिः ॥ ४० ॥

## रुद्राश्रयेपिप्रायेण ॥ ४१ ॥

द्वावपिरुद्रौयदिशुभौतर्ह्यंत्यशूलेमृतिःस्यादितिरुद्राश्रितराशावपिकदाचिन्मरणयोगमाह। रुद्राश्रयराशावप्यायुःसमाप्तिर्भवतीत्यर्थः।प्रायःशब्दाद्रुद्राश्रयात्पूर्वंपरतोवाऽऽयुःसमाप्तिर्भवतिइतिध्वनितम् ॥ ४१ ॥

## क्रियेपितरिविशेषेण ॥ ४२ ॥

अत्रविशेषमाह । मेषेजन्मलग्नेसतिविशेषेणरुद्राश्रयेआयुःसमाप्तिर्भवति ॥ ४२ ॥

## प्रथममध्यमोत्तमेषुवातत्तदायुषाम् ॥ ४३ ॥

योगभेदेननिधनस्थानंदर्शयति । तत्तदायुषामल्पमध्यदीर्घायुर्योगवतांप्रथममध्यमोत्तमेषुप्रथमद्वितीयतृतीयरुद्रशूलेषुवाक्रमेणायुःसमाप्तिर्भवति । रुद्रशूलराशिमहादशायांनिधनेसिद्धेकस्यामंतर्दशायांनिधनमित्यर्थः । अत्र शूलेचेदित्युक्त्यारुद्रशूलनिर्याणयोगेसत्यपिबलवत्तरयोगांतरवशतोरुद्रशूलनिर्याणबाधोपिभवतीतिध्वनितम् ॥ ४३ ॥

## स्वभावेशोमहेश्वरः ॥ ४४ ॥

अथफलविशेषकथनायमहेश्वरग्रहंलक्षयति । स्वादात्मकारकाद्भावेशोऽष्टमराशीशोमहेश्वरग्रहइत्यर्थः ॥ ४४ ॥

## स्वोच्चेस्वगृहेरिपुभावेशःप्राणी ॥ ४५ ॥

यदिकारकादष्टमेशःस्वोच्चेस्वगृहेवास्यात्तदाकारकाद्द्वादशाष्टमेशयोर्मध्येयोबलीसएवमहेश्वरःस्यान्नतुस्वभावेशइत्यर्थः । द्वावपितुल्यबलौचेत्तद्द्वौमहेश्वरौभवतएवस्वोच्चेसग्रहइतिपाठेतुकारकोच्चराशौग्रहयुक्तेसतिकारकादष्टमद्वादशेशयोर्मध्येयोबलीसमहेश्वरः । अस्मिन्पक्षेप्रकारांतरेणायमपिमहेश्वरइत्यर्थः ॥ ४५ ॥

## पाताभ्यांयोगेस्वस्यतयोर्वारोगेततः ॥ ४६ ॥

प्रकारांतरेणमहेश्वरमाह । स्वस्यकारकस्यपाताभ्यांराहुकेत्वोरन्यतरेणयोगेतथाकारकाद्रोगेऽष्टमेतयोराहुकेत्वोर्योगेवासतिकारकात्स्व्यादिप्रसिद्धगणनयाततःषष्ठोग्रहोमहेश्वरोभवति । द्वित्राणांमहेश्वराणांसंभवेयोबलीसएवमहेश्वरःस्यादिति ॥ ४६ ॥

## प्रभुभाववैरीशप्राणीपितृलाभप्राण्यनुचरोविषमस्थो ब्रह्मा ॥ ४७ ॥

अथब्रह्मग्रहमाह । पितृलाभप्राणीतिसूत्रमध्येस्थितत्वाद्देहलीदीपकन्यायेनलग्नसप्तमयोर्योबलवद्राशिस्तस्मात्षष्ठाष्टमद्वादशराशिस्वामिनांमध्येयोबलवान्भवेद्विलग्नतत्सप्तमराश्योर्मध्येयोबलवद्राशिस्तत्पृष्ठगश्चसनमेषमिथुनादिविषमराशिगतःस्यात् सएवग्रहोब्रह्माभवतीतिलग्नस्यपृष्ठराशयः सप्तमादिद्वादशांताःसप्तमस्यपृष्ठराशयोलग्नादिषष्ठांताबोध्याः ॥ ४७ ॥

## ब्रह्मणिशनौपातयोर्वाततः ॥ ४८ ॥

प्रकारांतरेणब्रह्माणमाह । शनौब्रह्मणिब्रह्मलक्षणाक्रांतेसतिपातयोराहुकेत्वोर्वाब्रह्मणोःसतोस्तस्माच्छनेराहोःकेतोर्वाततःषष्ठोग्रहोब्रह्माभवतीत्यर्थः । नतुब्रह्मलक्षणाक्रांततयाप्रसक्तः शन्यादिर्ब्रह्मास्यात् ॥ ४८ ॥

## बहूनांयोगेस्वजातीयः ॥ ४९ ॥

बहूनांब्रह्मलक्षणाक्रांतत्वेकतमोब्रह्मास्यादित्याशंकायामाह । बहूनांग्रहाणांब्रह्मयोगेसतिस्वजातीयःकारकजातीयोऽधिकांशकोब्रह्मास्यादित्यर्थः ॥ ४९ ॥

## राहुयोगेविपरीतम् ॥ ५० ॥

अत्रैवविशेषमाह । राहोर्ब्रह्मणासहसंयोगेसतिविपरीतंबहूनांब्रह्मणांमध्येयोन्यूनांशकःसएवब्रह्मास्यात् शनिराहुकेतूनांततइत्युक्तत्याब्रह्मत्वाभावात् । ब्रह्मत्वेसतितुराहोर्ब्रह्मत्वयोगेग्रहन्यूनांशश्चेद्ब्रह्मास्यादित्यर्थः स्यादिति ॥ ५० ॥

## ब्रह्मास्नभावेशोभावस्थः ॥ ५१ ॥

पुनःप्रकारांतरेणब्रह्माणमाह।कारकादष्टमेशः कारकादष्टमस्थश्चग्रहोब्रह्मास्यात्। यत्तुअष्टमेशत्वेसत्यष्टमराशिगतत्वमेवब्रह्मत्वेप्रयोजकत्वमितिमतंतन्नतथासतिविवादप्रसक्त्यभावेनैतत्सूत्रमनन्वितंस्यात् । नह्येत

त्पूर्वान्यितंव्यवहितत्वाद्ग्रंथास्वारस्यप्रसक्तेःवहूनामितिसूत्रेणैवशंकायाः उपक्षीणत्वाच्चेति अष्टमेशाष्टमस्थयोरेकत्वेनिर्विवादंब्रह्मत्वम् ॥ ५१ ॥

२-१-८२ विवादेवली ॥ ८२ ॥

तयोर्भेदेतुकतमोभवेदित्यत्राह । विवादेद्वयोर्ब्रह्मत्वेसतियोवलीसएव ब्रह्मास्यात् । अथवासर्वेपुब्रह्मसुसमानांशवत्सुयोऽग्रहात्सग्रहइत्यादिना वलीसब्रह्माभवतीत्यर्थः ॥ ५२ ॥

२-१-८३

ब्रह्मणोयावन्महेश्वरर्क्षदशांतमायुः ॥ ८३ ॥

अथब्रह्ममहेश्वरयोःफलमाह । स्थिरदशायांब्रह्मग्रहाश्रितराशिमारभ्यमहेश्वरराशिदशापर्यंतमायुर्भवतीत्यर्थः ॥ ५३ ॥

२-१-८४

तत्रापिमहेश्वरभावेशत्रिकोणाब्दे ॥ ८४ ॥

महादशायांनिधनाश्रयीभूतामंतर्दशामाह । तत्रापिमहेश्वराश्रितराशिमहादशामपिमहेश्वराश्रितराशितोऽष्टमराशिनाथस्ययस्त्रिकोणराशिः प्रथमपंचमनवमात्मकोराशिस्तस्यैकद्यात्मकोयोंतर्दशाकालस्तत्रमृत्युः स्यात् । अब्दइति । द्वादशवर्षैस्तत्तद्राशिदशेत्यभिप्रायेणन्यूनसंख्यादशासत्त्वेत्वब्दतोन्यूनमंतर्दशास्वप्यानेयमेव ॥ ५४ ॥

२-१-८५

स्वकर्मचित्तरिपुरोगनाथप्राणीमारकः ॥ ८५ ॥

अयसूत्रद्वयेनमारकग्रहंलक्षयति । चित्तनाशःप्रायेणस्वस्मादात्मकारकात्तृतीयषष्ठद्वादशाष्टमेशानांमध्येयोबलवान् समारकग्रहइत्यर्थः । सर्वेषांसमबलत्वेसर्वेपिमारकाःस्युः । वहूनांमारकत्वेकस्यांदशायांनिधनमित्याशंकायामल्पमध्यदीर्घायुपांयत्रयत्रयस्यसंभवस्तद्राशिदशायांनिधनमित्यर्थः।षष्ठेशस्तुप्रायेणमुख्यतयामारकइत्यर्थः। अत्रवृद्धैरप्युक्तम् "षष्ठाष्टमेशौभवतोमारकावष्टमेश्वरः॥प्रायेणमारकोराशिदशास्वत्रविशेषतः॥षष्ठभेपापभूयिष्ठेषष्ठेशोमुख्यमारकः॥षष्ठात्रिकोणगोवापिमुख्यमारकइष्यते॥ मध्यायुपिमृतिःषष्ठदशायामष्टमस्यवा ॥षष्ठात्रिकोणस्यपुन

र्दीर्घाल्पविषयेभवेत् ॥षष्ठेश्वलयुतेतस्यात्रिकोणेमृतिमादिशेत्॥षष्ठेशश्चेद्ब लाढ्यःस्यात्तत्त्रिकोणेमृतिंवदेदि " ति " व्यवस्थेयं समस्तापिकारका दिदशास्वपि । बलिनः शुक्रशशिनोर्ग्राह्यंषष्ठाष्टमादिकं ॥" श्लोकाः स्पष्टार्थाः ॥ ५५ ॥

## तदृक्षदशायांनिधनम् ॥ ५६ ॥

मारकस्यफलमाह । मारकग्रहाश्रितस्यमारकस्वामिकस्यवामहाद शायांचरस्थिरादिरूपायांनिधनंस्यादित्यर्थः ॥ ५६ ॥

## तत्रापिकालाद्रिपुरोगचित्तनाथापहारे ॥ ५७ ॥

मारकमहादशायांनिधनाश्रयीभूतामंतर्दशामाह । तत्रापिमारकग्रह दशायामपिकालात्कारकसप्तमात्द्वादशाष्टमषष्ठेशानामंतर्दशायांनिधनं स्यादित्यर्थः । एषांमध्येबलवतोंतर्दशायांनिधनमितिविवेचनीयम् । अ त्रविशेषोवृद्धैरुक्तः "चरेचरास्थिरद्वंद्वाइतियोराशिरागतः॥सएवमारको राशिर्भवतीतिविनिर्णयः॥बहुराशिसमविशेबलवान्मारकःस्मृतः"इति । अयंभावः । पितृदिनेशादिद्विकानामाश्रयीभूतोयोराशिः समारकस्तेरा शयोयदिबहवस्तार्हिअग्रहास्सग्रहइत्यादिबलेनयोराशिर्बलवान्समारक स्तद्राशिदशायांतदीशाश्रयराशिदशायांवामृतिरितिअपरेतु "चरइत्या दिनायुर्यत्तस्समास्युचितोभवेत्योराशिःसतुविज्ञेयोमारकःसूत्रसंमतः" इतिचरइत्यादिश्लोकेनयद्दीर्घाद्यायुःसमागतंपूर्णमित्यादिनास्पष्टीकृतम् तदायुर्यद्राशौसमाप्तंतद्राशिरेवमारकइत्यर्थः ॥ ५७ ॥

## द्वितीयाध्यायस्यप्रथमःपादः॥ १ ॥

इतिजैमिनीयसूत्रव्याख्यायांसुबोधिन्यां

द्वितीयाध्यायस्यप्रथमःपादः ॥ १ ॥

---

## रविशुक्रयोःप्राणीजनकः ॥ १ ॥

पित्रादीनांनिधनकालंबोधयितुंपित्रादिकारकमुपादिशति । सूर्यभार्ग वयोर्मध्येयोबलवान्सपितृकारकःस्यात् ॥ १ ॥

**चन्द्रारयोर्जननी ॥ २ ॥**

चंद्रभौमयोर्योर्वलीसमातृकारकः ॥ २ ॥

**अप्राण्यपिपापदृष्टः ॥ ३ ॥**

रविशुक्रयोश्चंद्रारयोश्च मध्येयोनिर्बलः सोपिपापग्रहदृष्टश्चेद्यथाक्रमं पितृमातृकारकतांलभते ॥ ३ ॥

**प्राणिनिशुभदृष्टेतच्छूलेनिधनंमातापित्रोः ॥ ४ ॥**

अथप्राणिपित्रादिकारकस्यफलमाह । पितृकारकेमातृकारकेवाप्राणिनिशुभदृष्टेसतिपितृमातृकारकाश्रितराशित्रिकोणदशायांपितुर्मातुश्चमरणंज्ञेयम् ॥ ४ ॥

**तद्भावेशेस्पष्टबले ॥ ५ ॥**

द्विविधकारकस्यफलमाहस्पष्टम् ॥ ५ ॥

**तच्छूलइत्यन्ये ॥ ६ ॥**

ताभ्यांप्राण्यप्राणिकारकाभ्यांभावेशेऽष्टमेशेपितृमातृकारकात्स्पष्टबलेऽधिकबलेसत्यष्टमेशाश्रितराशितस्त्रिकोणराशिदशायांनिधनंभवतीत्यन्येप्राहुः । अधिबलइतिवक्तव्ये स्पष्टबलइत्युक्त्यांशाधिक्यबलमत्रग्राह्यम् ॥ ६ ॥

**आयुषिचान्यत् ॥ ७ ॥**

पित्रादीनामायुषिविचारणीयेअन्यच्चतत्तत्कारकंप्रकारांतरोक्तनिर्याणशूलदशादिकंचविचार्यमित्यर्थः ॥ ७ ॥

**अर्कज्ञयोगेतदाश्रयेलग्नमेषदशायांपितुरित्येके ॥ ८ ॥**

पितृनिधनेविशेषमाह । क्रियेलग्नात्द्वादशराशौतदाश्रयेर्कबुधाश्रयेसिंहमिथुनकन्यान्यतरराशिसत्त्वेऽर्कज्ञयोगेसूर्यबुधयोर्योगेसतीलग्नमेषदशायांलग्नात्पंचमराशिदशायांपितुर्निधनंस्यादित्येकेवदंति लग्नेइतिपाठेतुक्रियेमेषराशौरविज्ञयोगाश्रयेलग्नेसतिमेषस्यदशायांपितुर्निधनमित्यर्थः ॥ ८ ॥

व्यर्कपापभ्रात्रदृष्टयोःपित्रोःप्राग्द्वादशाब्दात् ॥ ९ ॥

अथबाल्यएवमातापित्रोर्मरणयोगमाह । पित्रोःमातापितृकारकयोः प्राणिनोरप्राणिनोर्वारविरहितपापमात्रेणदृष्टयोःसतोर्द्वादशाब्दात्पूर्वमेव मातापित्रोर्यथाक्रमंनिधनंभवति । रविशुभदृष्टौनायंयोगइति ॥ ९ ॥

गुरुशूलेकलत्रस्य ॥ १० ॥

स्त्रीनिधनमाह। गुर्वाश्रितराशित्रिकोणदशायांपत्नीनिधनंस्यात् १०

तत्तच्छूलेतेषाम् ॥ ११ ॥

एवमन्येषामपिनिधनमाह । पुत्रमातुलादिकारकराशेस्त्रिकोणदशायांपुत्रमातुलादेर्निधनमित्यर्थः ॥ ११ ॥

कर्मणिपापयुतदृष्टेदुष्टंमरणम् ॥ १२ ॥

मरणेशुभाशुभभेदंदर्शयतिसूत्रैः । लग्नात्कारकाद्वातृतीयेपापेनयुते दृष्टेवादुष्टंमरणंभवति॥ १२ ॥

शुभंशुभदृष्टियुते ॥ १३ ॥

लग्नात्कारकात्तृतीयेशुभेनयुक्तेदृष्टेवाशुभंमरणंस्यात् अग्निजलपातबंधनादिप्रयोज्यंदुष्टंमरणंज्वरादिरोगप्रयोज्यंशुभमुच्यते ॥ १३ ॥

मिश्रेमिश्रम् ॥ १४ ॥

शुभपापयोर्द्वयोरपिदृष्टौयोगेवाशुभाशुभात्मकंमरणमित्यर्थः॥१४ ॥

आदित्येनराजमूलात् ॥ १५ ॥

मरणनिमित्तानिदर्शयति । तृतीयेरवियोगेदृष्टौवासत्यांराजहेतोर्मरणम् ॥ १५॥

चंद्रेणयक्ष्मणः ॥ १६ ॥

तृतीयेचंद्रेणयुतेदृष्टेवायक्ष्मतःक्षयरोगान्मरणम् ॥ १६ ॥

कुजेनव्रणशस्त्राग्निदाहाद्यैः ॥ १७ ॥

तृतीयेकुजेनयुतेदृष्टेवाव्रणादितोनिधनम् ॥ १७ ॥

शनिनावातरोगात् ॥ १८ ॥

तृतीयेशनिनायुतेदृष्टेवातरोगतोनिधनम् ॥ १८ ॥

मंदमांदिभ्यांविपसर्पजलोद्बंधनादिभिः ॥ १९ ॥

तृतीयेशनिगुलिकाभ्यांयुतेदृष्टेवाविषादिभिर्मरणम् । गुलिकस्यस्पष्टीकरणमन्यत्रानुसंधेयम् ॥ १९ ॥

केतुनाविपूचीजलरोगाद्यैः ॥ २० ॥

तृतीयेकेतुनायुतेदृष्टेवाविपूच्यादितोमरणम् ॥ २० ॥

चंद्रमांदिभ्यांपूगमदान्नकवलादिभिःक्षणिकम् ॥ २१ ॥

तृतीयेचंद्रगुलिकाभ्यांयुतेदृष्टेवाक्रमुकमदादिनासत्वरंमरणम् ॥ २१ ॥

गुरुणाशोफाऽरुचिवमनाद्यैः ॥ २२ ॥

तृतीयेगुरुणायुतेदृष्टेवाशोफादिभिर्निधनम् ॥ २२ ॥

शुक्रेणमेहात् ॥ २३ ॥

तृतीयेशुक्रेणयुतेदृष्टेवाप्रमेहरोगान्निधनम् ॥ २३ ॥

मिश्रेमिश्रात् ॥ २४ ॥

तत्तद्रोगानांबहूनांतृतीयेयोगेदर्शनेवाऽनेकरोगान्निधनम् ॥ २४ ॥

चंद्रदृग्योगान्निश्चयेन ॥ २५ ॥

तृतीयेतत्तद्ग्रहयोगदर्शनसत्त्वेतत्रैवचंद्रदृष्टियोगसत्त्वेतत्तद्रोगान्निश्चयेनमरणंवक्तव्यमित्यर्थः । एतेनचंद्रदृग्योगाभावेतृतीयस्थानगेनापितत्तद्ग्रहेणतत्तद्रोगमरणेसंदेहइतिध्वनितम् ॥ २५ ॥

## शुभैःशुभेदेशे ॥ २६ ॥

अथनिधनेदेशभेदंदर्शयतिसूत्राभ्यां स्पष्टम् । अत्रबहुत्वमविवक्षितं तृतीयेशुभदृग्योगसत्त्वे शुभेदेशेपुण्यभूमौमरणम् ॥ २६ ॥

## पापैःकीकटे ॥ २७ ॥

पापैस्तुकीकटेमगधादिपापदेशेमरणमित्यर्थः । शुभपापोभययोगेतु नकाश्यादिशुभेनमगधादिपापेदेशइति ॥ २७ ॥

## गुरुशुक्राभ्यांज्ञानपूर्वम् ॥ २८ ॥

मृतौज्ञानाज्ञानपूर्वकत्वमाह । स्पष्टम् ॥ २८ ॥

## अन्यैरन्यथा ॥ २९ ॥

लग्नात्कारकाचृतीयगुरुशुक्राभ्यांयुतेदृष्टेवाज्ञानपूर्वमरणम् गुरुशुक्रातिरिक्तयोगदर्शनाभ्यामज्ञानपूर्वमरणम् ॥ २९ ॥ २—२—२

## लेपनजनकयोर्मध्येशनिराहुकेतुभिःपित्रोर्नसंस्कर्ता ३०

फलांतरमाह । लग्नाद्द्वादशयोर्मध्येशनिराहोःशनिकेत्वोर्वास्थित्या मातापित्रोःसंस्कर्तानस्यात् ॥ ३० ॥

## लेपादिपूर्वार्द्धेजनकाद्यपरार्द्धे ॥ ३१ ॥

लग्नद्वादशमध्यंप्रकटयति । लग्नादिपूर्वार्द्धेलग्नादिप्रथमषट्के द्वादशाद्यपरार्द्धेद्वादशाद्युत्तरषट्केशनिराहुशनिकेतुसत्त्वेमातृपित्रोः क्रमात् संस्कर्तान । तथाचलग्नादिषट्केशनिराहुशनिकेतुसत्त्वेमातुः संस्कर्तान । सप्तमादिषट्केशनिराहुशनिकेतुसत्त्वेपितुःसंस्कर्तानेतिफलितोर्थः । शन्यादित्रिकसत्त्वेईतिकुतोनोक्तमितिचेत् राहुकेत्वोरेकस्थानस्थितेर्बाधत्वान्नोक्तमिति ॥ ३१ ॥

शुभदृग्योगान्न ॥ ३२ ॥

अपवादमाह । तत्रलग्नादिद्वादशादिमध्येशुभदृग्योगसत्त्वेपूर्वोक्तयोगोनस्यात्किंतुपित्रोःसंस्कर्तास्यात् ॥ ३२ ॥

## इति द्वितीयाध्यायस्यद्वितीयःपादः ॥ २ ॥

इतिश्रीजैमिनीयसूत्रव्याख्यायांसुबोधिन्यांद्वितीयाध्यायस्य द्वितीयःपादः ॥ २ ॥

---

विषमेतदादिर्नवांशः ॥ १ ॥

अथदशाभेदवल्लभेदादीनाह तत्रादौनवांशदशामाह। विषमेलग्नेसति तदादिलग्नादिर्नवांशदशास्यात् । अन्यथासप्तमराशौलग्नेसत्यादर्शादिः सप्तमराश्यादिर्नवांशदशास्यात् । आदर्शःसंमुखोभवति संमुखराशिः सप्तमएवभवति एतद्दशायांप्रतिराशिनवनवाब्दाभवंतीतिनवांशदशेति नामधेयंज्ञेयम्।यत्तु"स्थिरराशेःषष्ठराशिश्चरस्याष्टमएवसः।द्विस्वभावस्य राशिस्तुसप्तमःसंमुखोमतः"इतिश्लोकंकृत्वासंमुखत्वंपर्यैरुक्तं तन्नातदृष्टिपरमेवनत्वन्यपरम् ॥ १ ॥

अन्यथाऽऽदर्शादिः ॥ २ ॥

अथस्थिरदशामाह । स्पष्टम् ॥ २ ॥

शशिनंदपावकाःक्रमादब्दाःस्थिरदशायाम् ॥३॥

चरस्थिरद्विस्वभावराशीनांक्रमेणसप्ताष्टनवाब्दानियताःस्थिरदशायां भवंतीत्यर्थः । तथाचमेषेसप्तवृषेष्टौमिथुनेनवपुनःकर्केसप्तेत्यादिक्रमेणद्वादशराशिपर्यंतमब्दाज्ञातव्याः ॥ ३ ॥

ब्रह्मादिरेषा ॥ ४ ॥

एतद्दशारंभस्थानमाह । एषादशाब्रह्मग्रहादिर्ब्रह्मग्रहाश्रितराशिमाभ्यमवर्तनीत्यर्थः ॥ ४ ॥

## अथप्राणः ॥ ५ ॥ २— ३ —

अथबल मधिकरोति । अथानंतरंप्राणोबलमुच्यते ॥ ५ ॥

## कारकयोगःप्रथमोभानाम् ॥ ६ ॥

राशीनामाद्यंबलंकारकयोगोभवति ॥ ६ ॥

## साम्येभूयसा ॥ ७ ॥

ग्रहयोगसाम्ये उभयत्रग्रहसत्त्वेसतिभूयसाग्रहयोगेनबलंभवति ग्रहयो गभूयस्त्वादिभिरपिसाम्येनिर्णायकमाह ॥ ७ ॥

## ततस्तुंगादिः ॥ ८ ॥ २— २—

ततोभूयस्त्वानंतरंतुंगादिर्बलंस्यात् राशेस्तुंगस्वगृहस्थमित्रगृहस्य ग्रहयोगः प्राणइत्यर्थः ॥ ८ ॥

## निसर्गस्ततः ॥ ९ ॥ २— २—

अथराशीनांनिसर्गबलमाह । ततस्तुंगादिबलानंतरंनिसर्गबलंग्राह्यं चरात्स्थिरःस्थिरात्द्विस्वभावोबलीत्यर्थः । तदुक्तंवृद्धैः " अग्रहात्स ग्रहोज्यायान्सग्रहेष्वधिकग्रहः । साम्येचरस्थिरद्वंद्वाःक्रमात्स्युर्बलशा लिनः" इति ॥ ९ ॥

## तदभावेस्वामिनइत्थंभावः ॥ १० ॥ २—२—

राशौतदभावेकारकयोगाद्यभावेस्वामिनोराश्याधिपतेरित्थंभावः का रकयोगादिर्बलंयद्राशिनाथोबलवान्सराशिर्बलीतिभावः ॥ १० ॥

## आग्रायतोत्रविशेषात् ॥ ११ ॥

एकराशौबहुग्रहेषुसत्सुतेषांराशिद्वारकबलसाम्येपिअत्रास्मिन्नयेआ ग्रायतोग्रहोविशेषाद्बलीभवति अग्रमायतःगतः अग्रायतः अग्रायत एवआग्राएतः अधिकांशकइतियावत् । तथाचबहुग्रहेष्वेकराशिस्थेष्व धिकांशकोबलवानिति ॥ ११ ॥

## प्रातिवेशिकःपुरुषे ॥ १२ ॥

पुरुषेओजराशौप्रातिवेशिकःपार्श्वराशिवर्तीद्विद्वादशगतोपिग्रहः स्व स्यबलकर्त्तास्यात् ॥ १२ ॥

## इतिप्रथमः ॥ १३ ॥

इति प्रोक्तप्रकारेणप्रथमः प्राणउक्तइत्यर्थः ॥ १३ ॥

शुभदृग्योगान्न ॥ ३२ ॥

अपवादमाह । तत्रलग्नादिद्वादशादिमध्येशुभदृग्योगसत्त्वेपूर्वोक्तयोगोनस्यात्किंतुपित्रोःसंस्कर्तास्यात् ॥ ३२ ॥

## इति द्वितीयाध्यायस्यद्वितीयःपादः ॥ २ ॥

इतिश्रीजैमिनीयसूत्रव्याख्यायांसुबोधिन्यांद्वितीयाध्यायस्य द्वितीयःपादः ॥ २ ॥

---

विषमेतदादिर्नवांशः ॥ १ ॥

अथदशाभेदबलभेदादीनाह तत्रादौनवांशदशामाह।विषमेलग्नेसति तदादिलग्नादिर्नवांशदशास्यात् । अन्यथासप्तमराशौलग्नेसत्यादर्शादिः सप्तमराश्यादिर्नवांशदशास्यात् । आदर्शःसंमुखोभवति संमुखराशिः सप्तमएवभवति एतद्दशायांप्रतिराशिनवनवाब्दाभवंतीतिनवांशदशेति नामधेयंज्ञेयम्।यत्तु"स्थिरराशेःषष्ठराशिश्चरस्याष्टमएवसः।द्विस्वभावस्य राशिस्तुसप्तमःसंमुखोमतः"इतिश्लोकंकृत्वासंमुखत्वंपंथैरुक्तं तत्रातद्दृष्टिपरमेवनत्वन्यपरम् ॥ १ ॥

अन्यथाऽऽदर्शादिः ॥ २ ॥

अथस्थिरदशामाह । स्पष्टम् ॥ २ ॥

शशिनंदपावकाःक्रमादब्दाःस्थिरदशायाम् ॥३॥

चरस्थिरद्विस्वभावराशीनांक्रमेणसप्ताष्टनवाब्दानियताःस्थिरदशायां भवंतीत्यर्थः।तथाचमेषेसप्तवृषेष्टौमिथुनेनवपुनःकर्केसप्तेत्यादिक्रमेणद्वादशराशिपर्यंतमब्दाज्ञातव्याः ॥ ३ ॥

ब्रह्मादिरेषा ॥ ४ ॥

एतद्दशारंभस्थानमाह । एषादशाब्रह्मग्रहादिर्ब्रह्मग्रहाश्रितराशिमाभ्यप्रवर्तनीत्यर्थः ॥ ४ ॥

अथप्राणः ॥ ५ ॥

अथबल मधिकरोति । अथानंतरंप्राणोबलमुच्यते ॥ ५ ॥

कारकयोगःप्रथमोभानाम् ॥ ६ ॥

राशीनामाद्यंबलंकारकयोगोभवति ॥ ६ ॥

साम्येभूयसा ॥ ७ ॥

ग्रहयोगसाम्येउभयत्रग्रहसत्त्वेसतिभूयसाग्रहयोगेनबलंभवति ग्रहयोगभूयस्त्वादिभिरपिसाम्येनिर्णायकमाह ॥ ७ ॥

ततस्तुंगादिः ॥ ८ ॥

ततोभूयस्त्वानंतरंतुंगादिर्बलंस्यात् राशेस्तुंगस्वगृहस्थमित्रगृहस्थ ग्रहयोगः प्राणइत्यर्थः ॥ ८ ॥

निसर्गस्ततः ॥ ९ ॥

अथराशीनांनिसर्गबलमाह । ततस्तुंगादिबलानंतरंनिसर्गबलंग्राह्यं चरात्स्थिरःस्थिरात्द्विस्वभावोबलीत्यर्थः । तदुक्तंवृद्धैः " अग्रहात्सग्रहोज्यायान्सग्रहेप्वधिकग्रहः । साम्येचरस्थिरद्वंद्वाःक्रमात्स्युर्बलशालिनः" इति ॥ ९ ॥

तदभावेस्वामिनइत्थंभावः ॥ १० ॥

राशौतदभावेकारकयोगाद्यभावेस्वामिनोराश्याधिपतेरित्थंभावः कारकयोगादिर्बलंयद्राशिनाथोबलवान्सराशिर्बलीतिभावः ॥ १० ॥

आग्रायतोत्रविशेषात् ॥ ११ ॥

एकराशौबहुग्रहेषुसत्सुतेषांराशिद्वारकबलसाम्येपिअत्रास्मिन्ग्रंथेआग्रायतोग्रहोविशेषाद्बलीभवति अग्रमायतःगतः अग्रायतः अग्रायत एवआग्रायतः अधिकांशकइतियावत् । तथाचबहुग्रहेष्वेकराशिस्थेष्वधिकांशकोबलवानिति ॥ ११ ॥

प्रातिवेशिकःपुरुषे ॥ १२ ॥

पुरुषेओजराशौप्रातिवेशिकःपार्श्वराशिवर्तीद्विद्वादशगतोपिग्रहः स्वस्यबलकर्त्तास्यात् ॥ १२ ॥

इतिप्रथमः ॥ १३ ॥

इति प्रोक्तप्रकारेणप्रथमः प्राणउक्तइत्यर्थः ॥ १३ ॥

## स्वामिगुरुज्ञदृग्योगोद्वितीयः ॥ १४ ॥

स्वामियोगोगुरुयोगोबुधयोगश्चैकैकशोराशीनांबलंभवति । स्वामिदृष्टिर्गुरुदृष्टिर्बुधदृष्टिश्चैकैकशोद्वादशराशीनांबलंस्यात् । एवंपड्बलानिद्वितीयः प्राणइत्यभिधीयते । द्वितीयंभावबलमित्यग्रिमसूत्रेद्वितीयंबलंग्राह्यमितिस्पष्टीकृतम् ॥ १४ ॥

## स्वामिनस्तृतीयः ॥ १५ ॥

स्वामिनोराश्यधिपतेर्वक्ष्यमाणः प्राणस्तृतीयः प्राणइत्यर्थः ॥१५॥

## स्वात्स्वामिनःकंटकादिष्वपारदौर्बल्यम् ॥ १६ ॥

अथस्वामिबलाबलेदर्शयति । स्वादात्मकारकात्कंटकादिपुकेंद्रपणफरापोक्लिमेपुस्वामिनोऽपारदौर्बल्यंभवति केंद्रेशून्यंपणफरेएकंआपोक्लिमेद्विगुणंदौर्बल्यंभवति ॥ १६ ॥

## चतुर्थतःपुरुपे ॥ १७ ॥

चतुर्थतः पापदृग्योगइत्यादिनावक्ष्यमाणचतुर्थबलादपिपुरुषेविषमराशौबलंभवतीत्यर्थः।यत्तु चतुर्थतःप्रथमांतात्तसिरित्युक्त्वापुरुपेचतुर्थःप्राणइतिकैश्चिदुक्तं तदयुक्तम् । एवंचेन्मुनेस्तात्पर्यंतर्हिचतुर्थः पुरुषेइत्येवब्रूयात् चतुर्थबलंकिमितिशंकानिरासायेति चत्वारइत्यग्रेवक्ष्यति। ननुतद्बलमप्यत्रैवकुतोनोक्तमितिचेत् तद्बलस्यसांप्रतमनुपयोगादुपयोगिबलमुक्त्वाकाश्चनदशाःप्रदर्श्यवक्ष्यतीति ॥ १७ ॥

## पितृलाभप्रथमप्राण्यादिशूलदशानिर्याणे ॥ १८ ॥

अथनिर्याणशूलदशामाह । लग्नसप्तमयोर्यः प्रथमबलवांस्तदादिगणनयाप्रवृत्तदशापापदालग्नसप्तमान्यतरत्रिकोण १ | ५ | ९ | राशिदशातदानिर्याणंभवतीत्यर्थः अत्रनवनवाब्दाग्राह्याः पुरुषेसमाः सामान्यतइतिसूत्रस्यवक्तव्यत्वात् ॥ १८ ॥

## पितृलाभपुत्रःप्राण्यादिःपितुः ॥ १९ ॥

पितुर्निर्याणदशामाह । लग्नसप्तमयोर्यौपुत्रराशिनवमराशीतयोर्मध्ये योबलवान् तमारभ्यक्रमेणप्रवर्तितयादशयाप्रोक्तरीत्याशूलदशायां पितुर्निर्याणंभवति ॥ १९ ॥

## आदर्शादिर्मातुः ॥ २० ॥

मातुर्निर्याणदशामाह । लग्नात्सप्तमाद्वाबलिनश्चतुर्थराशेःशूलः १ | ५ | ९ दशायांमातुर्निर्याणंस्यात् ॥ २० ॥

## कर्मादिर्भ्रातुः ॥ २१ ॥

लग्नात्सप्तमाद्वाबलिनस्तृतीयराशेः शूलदशायांभ्रातुर्निर्याणम् २१

## मात्रादिर्भगिनीपुत्रयोः ॥ २२ ॥

मातृआदिरितिपदच्छेदः । लग्नात्सप्तमाद्वाबलिनः पंचमराशेः प्रवृत्तशूलदशायांभगिनीपुत्रयोर्निर्याणम् ॥ २२ ॥

## व्ययादिर्ज्येष्ठस्य ॥ २३ ॥

लग्नात्सप्तमाद्वाबलिनएकादशराशेःप्रवृत्तायांदशायांततः शूलदशायांज्येष्ठभ्रातुर्निर्याणम् ॥ २३ ॥

## पितृवत्पितृवर्गः ॥ २४ ॥

लग्नात्सप्तमाद्वाबलिनोनवमराशेःप्रवृत्तायांदशायांततःशूलदशायां पितृवर्गस्यपितृव्यादेर्निर्याणंस्यात् ॥ २४ ॥

## ब्रह्मादिपुरुषेसमादासांताः ॥ २५ ॥

अथब्रह्मदशामाह । पुरुषेविषमेजन्मलग्नेसतिब्रह्मादिब्रह्मग्रहाश्रितराशितोदशाप्रवर्तनीयाः समादासांताः । कोर्थः । स्वराशेःषष्ठराशिस्वाम्यंतंसमादशाब्दाग्राह्याः । ननुदासांतशब्देनषष्ठराशिस्वाम्यंतमित्यर्थः कथमितिचेच्छृणु । षष्ठराश्यंतवर्षानयनेसर्वेषांसमत्वाद्वासत्युत्तरवर्षाभावाच्चायोग्यत्वात्स्वाम्यंतमित्यर्थः संपन्नइतिचेद्वर्षानयनेब्रह्मादिगणनातदापुरुषेब्रह्मादिसमादासांताइतिसूत्रप्रणीतंस्यादित्यलम् ॥२५ ॥

## स्थानव्यतिकरः ॥ २६ ॥

तत्रस्थानव्यतिकरः सप्तमसंबंधोस्ति।अयंभावः।विषमेआदौब्रह्माश्रितराशिदशा ततः क्रमेणान्येषांसमेलग्नेतुआदौब्रह्माश्रितसप्तमराशिदशा ततोव्युत्क्रमेणान्येषांराशीनांदशाः विषमेब्रह्मादिसमेतुब्रह्मसप्तमादि-क्रमव्युत्क्रमभेदेनदशाआनेयाइतिफलितार्थः ॥२६ ॥

पापदृग्योगस्तुंगादिग्रहयोगः ॥ २७ ॥

अथचतुर्थबलमाह । पापग्रहाणांदृष्टियोगश्चराशेर्बलंभवति तुंगमूलत्रिकोणस्वर्क्षातिमित्रमित्रराशिस्थितशुभग्रहयोगश्चबलंस्यादित्यर्थः । यत्तुतुंगादीतिग्रहयोगविभागंकृत्वातुंगादिबलंग्रहयोगबलंचेत्युक्तंपर्यंस्तन्न पापदृग्योगइतिसूत्रेणपापयोगबलमुक्तमेवग्रहयोगइतिसूत्रेणैवतदर्थलाभात्पापदृगित्येववक्तव्येयोगपदंव्यर्थंस्यात् । तस्मात्पापग्रहाणां यत्रकुत्रस्थितानामपियोगेबलंशुभग्रहाणांतुंतुंगादिस्थानामेवयोगेबलंनत्वन्यत्रस्थानामितिभावः । इतिचत्वारःकारकयोगाइत्यादिनात्रयः पूर्वोक्ताःएकोयमितिचत्वारःप्राणाइत्यर्थः ॥ २७ ॥

पंचमेपदक्रमात्प्राक्प्रत्यक्त्वम् ॥ २८ ॥

पूर्वोक्तचरदशायांक्रमव्युत्क्रमभेदमाह । त्रिभिस्त्रिभिर्भैरसमंचपदानिचत्वारिभवंति चक्रइति लग्नान्नवमेओजपदांतर्गतराशिश्चेत्क्रमात् युग्मपदांतर्गतराशिश्चेद्व्युत्क्रमाद्दशानेयापूर्वंचरंदशावर्षानयनमात्रमुक्तं क्रमव्युत्क्रमभेदस्तुनोक्तस्तस्मादत्रोक्तंदशारंभावधेरनुक्तत्वाल्लग्नमेवात्र ग्राह्यमिति ॥ २८ ॥

चरदशायामत्रशुभःकेतुः ॥ २९ ॥

अस्यांचरदशायांकेतुःशुभःशुभग्रहफलदइति ॥ २९ ॥

इद्वितीयाध्यायस्यतृतीयःपादः ॥ ३ ॥

इतिश्रीजैमिनीयसूत्रव्याख्यायां सुबोधिन्यांद्वितीयाध्यायस्य तृतीयःपादः ॥ ३ ॥

---

द्वितीयंभावबलंचरनवांशे ॥ १ ॥

चरराशेर्नवांशदशायांद्वितीयंभावबलंस्वामिगुरुज्ञदृग्योगइतिफलादेशायग्राह्यमित्यर्थः ॥ १ ॥

दशाश्रयोद्वारम् ॥ २ ॥

अथद्वारबाह्यराशीर्दर्शयति । स्पष्टम् ॥ २ ॥

ततस्तावतिथंबाह्यम् ॥ ३ ॥

यस्मिन्कालेयस्यराशेर्यादशाचरास्थिरपर्यायतस्तद्दशाश्रयोराशिर्द्वार

मित्युच्यते एनमेवपाकराशिरितिव्यवहरंति । लग्नाद्यावत्संख्याकोद्वार राशिस्तस्मात्तावत्संख्याकोराशिर्वाह्यमितिनिगद्यते एनमेवभोगराशिं वदंति । अत्रलग्नशब्देनजन्मकालेयद्राशितः प्राथमिकीदशासमारभ्यते सराशिर्ग्राह्यः लग्नंसप्तमोवाब्रह्मग्रहाद्याश्रितराशिर्वायथायोगमाद्यदशाश्र यराशिरेवपाकराशेरवधिर्नतुप्रसिद्धंलग्नम् एवंचेन्नोच्यतेतर्हि"सएवभोगरा शिश्चपर्यायेप्रथमेस्मृत"इतिनलगति । यत्रसप्तमाद्ब्रह्माश्रितराशितोवाद शाप्रवृत्तिस्तत्रयः पाकराशिःसएवभोगराशिरितिनसंभवति।तदुक्तंवृद्धैः "चरेऽनुझ्झितमार्गःस्यात्षष्ठषष्ठादिकाःस्थिरे । उभयेकंटकाज्ञेयालग्नपंच ममागयतः ॥ चरस्थिरद्विस्वभावेस्वजेपुप्राकृक्रमोमतः । तेष्वेवत्रिपुयु ग्मेपुग्राह्यंव्युत्क्रमतोखिलम् ॥एवमुल्लिखितोराशिःपाकराशिरितिस्मृतः। सएवभोगराशिश्चपर्यायेप्रथमेस्मृतः ॥ लग्नाद्यावतिथःपाकःपर्यायेयत्रह श्यते । तस्मात्तावतिथोभोगःपर्यायेतत्रगृह्यताम् । तदिदंचरपर्यायस्थिरप र्याययोर्द्वयोः । त्रिकोणाख्यदशायांचपाकभागेप्रकल्पनमि"ति । पर्यायेद शायामित्यर्थः ॥ ३ ॥

## तयोःपापेबंधयोगादिः ॥ ४ ॥

अथद्वारवाह्ययोःफलमाह त्रिभिस्सूत्रैः । तयोर्द्वारवाह्ययोः पापग्रहे सतितद्दशायांबंधादिःस्यात् । तदुक्तंवृद्धैः "पाकेभोगेचपापाढ्येदेहपीं डामनोव्यथे" ति ॥ ४ ॥

## स्वर्क्षेस्थतस्मिन्नोपजीवस्य ॥ ५ ॥

तस्मिन्द्वारेवाह्येवाराशौपापाश्रयीभूतेऽस्यपापस्यपरंतूपजीवस्यउपस मीपेजीवोयस्येतिगुरुसमीपवर्तिनःस्वर्क्षेस्थितौसत्यांनबंधादिरित्यर्थः।पा कभोगाश्रितः पापोयदिस्वर्क्षेगुरुयुक्तस्तर्ह्युक्तदोषोनेतियावत् ॥ ५ ॥

## भग्रहयोगोक्तंसर्वमस्मिन् ॥ ६ ॥

अस्मिन्द्वारेवाह्येवाराशिवेटाभ्यांयातायेयोगास्तेपूक्तम सर्वंशुभाशु भंफलंवेदितव्यमित्यर्थः ॥ ६ ॥

## पितृलाभप्राणितोयम् ॥ ७ ॥

अथकेंद्रदशारंभस्थानभेदंदर्शयति । लग्नसप्तमयोर्बलवान्राशिस्त स्मादयंवक्ष्यमाणदशाक्रमोज्ञेयस्तंराशिमारभ्यदशाप्रवर्तनीयेतियावत् । तदुक्तंवृद्धैः "बलिनःशुक्रशशिनोःकेंद्राख्यांतुदशांनयेत् । पुरुषश्चेत्ततो

नेयास्त्रीचेद्दर्पणतोनयेत्" अयमर्थः । पुरुषेजातकवांश्चेल्लग्नसप्तमयोर्ब लवतोदशानेयास्त्रीजातकवतीचेद्दुलवत्सप्तमाद्दशानेयेति ॥ ७ ॥

## प्रथमेप्राक्प्रत्यक्त्वम् ॥ ८ ॥

केंद्रदशाक्रमभेदानाहसूत्रैः।प्रथमेचरराशौलग्नेसप्तमेवासतिबलवल्लग्न सप्तमान्यतरराशेरनुज्झितमार्गेणदशाक्रमःस्यात्। तत्राप्योजयुग्मपदभे दात्प्राक्प्रत्यक्त्वंक्रमोत्क्रमत्वं प्रथमाद्वितीयाद्दिद्वादशादिरीत्याज्ञेयमि त्यर्थः। यत्तुसामान्यपरिभाषातःप्राक्प्रत्यक्त्वंप्राप्तमेवात्रत्यंप्राक्प्रत्यक्त्व पदमनुज्झितक्रमपदमितिपंथैरुक्तं तन्न सामान्यपरिभाषायादशानयन परत्वात् । नचैवंसत्यनुज्झितक्रमरूपोर्योनस्यादितिवाच्यंस्थिरद्व्यंगयोः षष्ठकेंद्रादिक्रमयोर्वक्ष्यमाणत्वादत्राक्षेपादेवतल्लाभात्।अन्यथा लाघवा त्प्रथमेक्रयतइत्येवंब्रूयात्। अत्रत्यंपंचमेपदक्रमादितिसूत्रोक्तंचप्राक्प्रत्य क्त्वपदंदशाक्रमेणसामान्यपरिभाषाऽप्राप्तौलिंगं ॥ ८ ॥

## द्वितीयेरवितः ॥ ९ ॥

द्वितीयेस्थिरराशौलग्नेसप्तमेवासतिबलवल्लग्नसप्तमान्यतमराशेः ओज युग्मपदभेदात्क्रमोत्क्रमाभ्यांरवितःषष्ठषष्ठक्रमेणदशाप्रवृत्तिर्ज्ञेयेत्यर्थः ९

## पृथक्क्रमेणतृतीयेचतुष्टयादि ॥ १० ॥

तृतीयेद्विस्वभावराशौलग्नेसप्तमेवासति बलवल्लग्नसप्तमान्यतमराशे श्चतुर्थादिकेन्द्रादितः पृथक्क्रमेणलग्नपंचमनवमादितः ओजयुग्मपदभे दात्क्रमोत्क्रमाभ्यांदशाप्रवृत्तिःस्यात्।लग्नसप्तमान्यतरकेंद्रात्प्रथमंततः पंचमपणफरतःततोनवमापोक्लिमतोदशाप्रवृत्तिर्ज्ञेयेतियावत् । अत्रनवन वाब्दाग्राह्याः । एतत्सूत्रत्रयस्यफलितोर्थोवृद्धैःस्पष्टीकृतः "चरेनुज्झित मार्गःस्यात्षष्ठषष्ठादिकाःस्थिरे।उभयेकंटकाज्ञेयालग्नपंचमभाग्यतः ॥ चरास्थिरद्विस्वभावेष्वोजेपुप्राक्क्रमोमतः । तेष्वेवत्रिपुयुग्मेपुग्राह्यंव्यु त्क्रमतोखिलम्" ओजेपुओजपदेष्वित्यर्थः ॥ १० ॥

## स्वकेंद्रस्थाद्याःस्वामिनोनवांशानाम् ॥ ११ ॥

अथकारककेंद्रादिदशामाह। नवांशदशाब्दानांस्वकेंद्रस्थाद्याःकारक

केंद्रस्थाद्याराशयःस्वामिनोभवंति आदौकेंद्रस्थास्ततःपणफरस्थास्ततआपोक्लिमस्थास्तत्रापिबलाधिकस्यप्रथममितिक्रमेणसर्वदुर्बलांतंनेयमितियावत्। तदुक्तमाद्यैः"प्रतिभंनववर्षाणिकारकाश्रयराशितः। जन्मसंपद्विपत्क्षेमःप्रत्यरिःसाधकोवधः॥ मैत्रंपरममैत्रंचेत्येवमंतर्दशानयेदि"ति। किंच स्वकेन्द्रस्थाद्याग्रहाःनवांशानांनवग्रहदत्तानामब्दानांस्वामिनोभवंतीति। अयमप्यर्थः सूत्रकारसंमतएव।अन्यथातत्लाभयोरितिसूत्रस्य वैयर्थ्यप्रसंगात्। अब्दानयनंत्वग्रेवादिष्यति ॥ ११ ॥

## पितृचतुष्टयवैषम्यबलाश्रयःस्थितः ॥ १२ ॥

केंद्रदशामपरामाह। पितृचतुष्टयेपुलग्नादिकेंद्रेपुवैषम्यबलाश्रयोऽधिकबलयुक्तोराशिःप्रथमदशाप्रदःस्थितःपर्यवसितः। नवांशानामित्यनुवृत्त्याप्रतिराशिनवनवाब्दादशाब्दाग्राह्याः ।तथाचकेंद्रपणफरापोक्लिमानां बलाधिकस्यप्रथममितिक्रमेणसर्वदुर्बलांतंदशानेयेति ॥ १२ ॥

## सतल्लाभयोरावर्तते ॥ १३ ॥

कारकादिग्रहदशाब्दानयनमाह।सकारकः तल्लाभयोर्लग्नसप्तमयोरावर्तते।अयमाशयः। लग्नात्सप्तमाच्चक्रमोत्क्रमगणनयाकारकपर्यंतराशिसंख्यायत्राधिकासाब्दरूपाकारकग्रहदशा अन्येषांतुग्रहात्कारकपर्यंतंविषमसमपदानुरोधेनक्रमव्युत्क्रमगणनयासंख्या सातत्तद्ग्रहाब्दाः कारकयुक्तग्रहाणांतुकारकाब्दतुल्याएवाब्दाभवंतीति। इयंग्रहदशाद्यैरुक्ता "लग्नात्कारकपर्यंतंसप्तमाद्वादशांनयेत् । उभयोरधिकासंख्याकारकस्यदशासमाः॥ग्रहयुक्तानांतुतत्तुल्यंप्रत्येकंस्युर्दशाःक्रमात्।ग्रहाःकारकपर्यंतसंख्यान्यस्यदशाभवेत्॥कारकस्तद्युतश्चादौतरकेंद्रादिस्थितास्ततः। दशाक्रमेणविज्ञेयाःशुभाशुभफलप्रदाः" इति ॥ १३ ॥

## स्वामिबलफलानिचप्राग्वत् ॥ १४ ॥

फलमाह।दशास्वामिनांराशीनांग्रहाणांचबलानिफलानिचप्राग्वत् पूर्वोक्तशास्त्रवत्ज्ञेयानीत्यर्थः ॥ १४ ॥

## स्थूलादर्शवैषम्याश्रयोमंडूकस्त्रिकूटः ॥ १५ ॥

अथमंडूकदशामाह।मंडूकःमंडूकदशात्रिकूटःचरास्थिरद्विस्वभावात्म

कत्रिकूटघटितत्वात्केंद्रादित्रिसमुदायघटितत्वाद्वात्रिकूटःस्थूलादर्शवैष म्याश्रयःलग्नसप्तमयोर्मध्येयोबलवांस्तदाश्रयोभवति। विषमस्यभावो वैषम्यमधिकबलत्वमितियावत्। अयमाशयः। लग्नसप्तमयोर्मध्येबलि नंराशिमारभ्यदशाप्रवृत्तिः तत्रापिपुरुषश्चेज्जातकवान् तदालग्नसप्त मयोर्बलवतोदशानेया स्त्रीजातकवतीचेद्बलवत्सप्तमाद्दशानेया।तदुक्तमा द्यैः"बलिनःशुक्रशशिनोर्ज्ञेयामंडूकदादशा।पुरुषश्चेत्ततोनेयास्त्रीचेद्दर्पण तोनयेत्" इतिकेंद्रादिक्रमेणमंडूकवत्प्लुत्यापतनान्मंडूकसंज्ञइत्यर्थः। त स्मादत्रैकद्रपणफरोपीाक्लमक्रमेणतत्रापिबलिनःप्राथम्यमितिरीत्यादशा नेयेतियावत्। प्रतिराशिनवाब्दाग्राह्याः॥ १५॥

## निर्याणलाभादिशूलदशाफले॥ १६॥

अथफलशूलदशामाह। फलेवक्तव्यशूलदशानिर्याणराशेःसप्तमरा शितःप्रवृत्ताभवति।शूलदशेतिनाममात्रनिर्देशः। रुद्रशूलरुद्राश्रयमहे श्वरर्क्षमारकर्क्षादिनिर्याणस्थानंबाहुल्येनशूलदशानेकविधानवाब्दाः अ त्रग्राह्याः॥ १६॥

## पुरुषेसमाःसामान्यतः॥ १७॥

विशेषविधानातिरिक्तसकलदशासाधारण्येदशारंभेदशाब्दानयनेच विशेषमाह।सर्वासुदशास्वारंभराशौपुरुषेविषमेसति सामान्यतःआरंभल ग्नाद्देशाप्रवृत्तिःसामान्यतःसमाःअब्दानवनववर्षरूपाग्राह्याःसमेसतितुत त्सप्तमात्रवनवाब्दाग्राह्यास्तस्मादेवदशाप्रवृत्तिर्भवतीत्यर्थःसिद्धवए।तदु क्तंवृद्धैः"ओजेलग्नंतदेवस्याद्युग्मेतत्सप्तमंभवेत्। दशौजक्रमतोज्ञेया युग्मे व्युत्क्रमतोमते"ति। किंच पुरुषेजातकवतिआरंभराशितदशाप्रवृत्तिःस्त्रि यांजातकवत्यांतुतत्सप्तमाद्दशाप्रवृत्तिः स्यात्। तदुक्तं "पुरुषश्चेत्ततोने यास्त्रीचेद्दर्पणतोनयेदि"ति॥ १७॥

## सिद्धाउडुदाये॥ १८॥

नक्षत्रदशामाह। नक्षत्राणुर्दायेविंशोत्तर्यष्टोत्तर्यादिरूपेषमाःअब्दाः सिद्धाःजातकांतरप्रसिद्धाग्राह्याइत्यर्थः॥ १८॥

## जगत्तस्थुषोरर्द्धयोगार्द्धे ॥ १९ ॥

अथयोगार्द्धदशामाह। योगार्द्धदशायांप्रतिराशिसमागतचरदशाब्द स्थिरदशाब्दयोर्योगार्द्धंकर्तव्यं तएवयोगार्द्धदशाब्दाः ॥ १९ ॥

## स्थूलादर्शवैषम्याश्रयमेतत् ॥ २० ॥

योगार्द्धदशारंभराशिमाह । एतद्योगार्द्धंस्थूलादर्शवैषम्याश्रयेलग्ने सप्तमयोर्बलवदाश्रयं भवति। अयमर्थः ।लग्नेबलवतिलग्नाद्दशाप्रवृत्तिः सप्तमेबलिनितस्माद्दशाप्रवृत्तिर्विषमेक्रमेणसमेऽव्युत्क्रमेणदशाः प्रवर्तनी याइति । स्त्रीजातकवतांचेद्बलवत्सप्तमाद्दशानेया पुरुषोजातकवांश्चेद्ब लवतोदशानेयेति । उक्तं वृद्धैः "बलिनस्तुदशानेयाराहोर्दिशाशिशुक्र योः । स्त्रीचेद्दर्पणतोनेयापुरुषश्चेत्ततोनयेदि" ति ॥ २० ॥

## कुजादिस्त्रिकूटपदक्रमेणदृग्दशा ॥ २१ ॥

अथदृग्दशामाह । कुजादिर्लग्ननवमादित्रिकूटपदक्रमेणदृग्दशाभव ति। आदौनवमस्यततोदृष्टिचक्रेसंमुखराशेःततःकुत्रचित्क्रमरीत्याकु त्रचिद्व्युत्क्रमरीत्यापंचमस्यततःकुत्रचित्क्रमेण कुत्रचित्व्युत्क्रमेणै कादशस्यसम्मुखराशेरित्युक्तम् ।तत्रप्रमाणाभावात्पंचमस्यादौकुतोन। उच्यते।दृष्टिविषयेआदौअभिपश्यंत्यृक्षाणि ततः पार्श्वभेचेतिसूत्रस्वार स्यादेवत्रिकूटपदंत्रिराश्यात्मकंपदंततो दशमस्यततएकादशस्यदृग्दशा भवतीतिनवमदृग्दशादशमदृग्दशाएकादशदृग्दशेतिफलितार्थः ॥ २१ ॥

## मातृधर्मयोःसामान्यंविपरीतमोजकूटयोः ॥ २२ ॥

अथौजयुग्मपदभेदेनगणनाक्रममुपदिशति । स्पष्टम् ॥ २२ ॥

## यथासामान्यंयुग्मे ॥ २३ ॥

मातृधर्मयोःपंचमैकादशयोर्गणनायांसामान्यंनकाचिदित्यात्मकंसामा न्यंसामान्यशास्त्रमोजकूटयोः ओजपदयोर्विपरीतंयुग्मेयुग्मपदयोर्यथा सामान्यंसामान्यमनतिक्रम्याविशेषं ।तथाचक्रमाद्वृषेद्वृश्चिकेचेत्यत्रवृषवृ श्चिकयोरोजकूटस्थत्वादव्युत्क्रमेणपंचमैकादशौदृग्योग्यौ सिंहकुंभयोर्यु

ग्मकूटस्थत्वाद्यथासामान्यंव्युत्क्रमेणैवपंचमैकादशौदृग्योग्यौभवतः द्वि स्वभावे दृग्योग्यपंचमैकादशयोरभावात् दृष्टिचक्रेयत्रयत्रदृष्टिस्तत्रादौ नवमदशानंतरंसप्तमस्यततोनवमादित्रिकेद्विस्वभावराशिदृग्दशायांपा र्श्वराशिद्वयदशाक्रमस्तुपुंराशिश्चेत् द्विस्वभावस्तर्हिक्रमेणस्त्रीराशिश्चे द्व्युत्क्रमेणचतुर्थदशमौग्राह्यौ ।अयंभावः।चरराशिपुक्रमेणपंचमैकादशौ स्थिरराशिपुव्युत्क्रमेणपंचमैकादशौदृग्योग्यौभवतस्तथैवपार्श्वराशिदशा क्रमोज्ञेयःद्विस्वभावराशिपुआदौनवमस्यततः सप्तमस्यततोविषमश्चेत् द्विस्वभावस्तर्हिक्रमेणचतुर्थस्यसमश्चेत्तदाव्युत्क्रमेणचतुर्थस्यततस्तथैव दशमस्येतिअत्रनवनवाब्दाग्राह्याः ॥ २३ ॥

## पितृमातृधर्मप्राण्यादिस्त्रिकोणे ॥ २४ ॥

अथत्रिकोणदशामुपादिशति । लग्नपंचमनवमेपुयोराशिर्बलवांस्तत स्त्रिकोणदशारंभः आरंभराशिमारभ्यक्रमोत्क्रमाभ्यांद्वादशराशीनांदशा ज्ञेयाः एतदुक्तंवृद्धैः"लग्नत्रिकोणयोराशिर्बलवानुक्तहेतुभिः।तदारभ्योन्न येच्छ्रीमच्चरपर्यायवद्दशा । युग्मराशिभुवांपुंसामोजंगृण्हीतसम्मुखे । ओजराशिभुवांस्त्रीणांयुग्मंगृण्हीतसंमुखं।ओजराशिभुवांपुंसांगृण्हीयादो जमेवतु ।युग्मराशिभुवांस्त्रीणांयुग्ममेवसमाश्रयेत् । क्रमोत्क्रमाभ्यांगण येदोजयुग्मेपुराशिपु" इतिकथनात्पुरुषेजातकवतिक्रमात्स्त्रियांजातकव त्यांतुव्युत्क्रमादत्यर्थःसंपन्नः । चरपर्यायवद्दशामितिकथनान्नायांताः समाइतिरीत्यावर्षाण्यत्रग्राह्याणीत्यर्थः ॥ २४ ॥

## तत्रबाह्याभ्यांतद्वत् ॥ २५ ॥

पाकभोगराशीदर्शयन्फलमतिदिशति । तत्तत्रिकोणदशायांद्वारबा ह्यराशिभ्यांतद्वत्पूर्वोक्तवत्फलंज्ञेयमित्यर्थः ।तदुक्तमाद्यैः"तदिदंचरपर्या यस्थिरपर्याययोर्द्वयोः । त्रिकोणाख्यदशायांचपाकभोगप्रकल्पने ॥ पाकेभोगेचपापाढ्येदेहपीडामनोव्यथेति" तत्तत्कारकेभ्यस्तत्तत्स्यान फलमाह ॥ २५ ॥

## घासगैरिकात्पत्नीकरात्कारकैःफलादेशः ॥ २६ ॥

तत्तत्कारकेभ्योघासगैरिकात्पत्नीकरात् सप्तमतृतीयप्रथमनवमेभ्यो

यथायोगंतत्तत्कारकैः फलादेशः कर्तव्यः । अयंभावः । सप्तमात्स्त्री विचारः तृतीयात्कनिष्ठभ्रातुः कारकात्स्वस्यनवमात्पितुर्धर्मस्यविचारः कार्यइत्यर्थः ॥ २६ ॥

तारकांशेमंदाद्योदशेशः ॥ २७ ॥

नक्षत्रदशामाह । जन्मदिनेयच्चंद्रस्यनक्षत्रंतदीयाःसर्वर्क्षरीत्याघाघटिकास्ताद्वादशधाविभज्यप्रथमखंडमारभ्य द्वादशसुखंडेपुलग्नादि द्वादशराशयः क्रमेणगणनीयाः यस्मिन्घटिकामयेखंडेजन्मसखंडः आदितआरभ्यगणनयाजन्मलग्नादितोयद्राशिविशिष्टस्तंराशिमारभ्यक्रमव्युत्क्रमभेदेनद्वादशराशीनांदशाआनेयाइत्यर्थः । अत्रप्रतिराशिनवाब्दाग्राह्याःसर्वंस्पष्टम् ॥ २७ ॥

तस्मिन्नुच्चेनीचेवाश्रीमंतः ॥ २८ ॥ स्वमित्रभे किंचित् ॥ २९ ॥ दुर्गतोऽपरथा ॥ ३० ॥ स्ववैपम्येयथासंक्रमव्युत्क्रमौ ॥ ३१ ॥ साम्ये विपरीतम् ॥ ३२ ॥ शनौचेत्यके ॥ ३३ ॥

गुणविशेषतः फलंदर्शयति सूत्रैः । तस्मिंस्ताराल्ग्नेशेउच्चेनीचेवा राशौसतिजातानराः श्रीमंतोभवंतिताराल्ग्नेशेस्वमित्रराशौसतिकिंचिल्लक्ष्मीवंतोभवंति । अपरया शत्रुराशौसतिदुर्गतोदरिद्रोभवतीत्यर्थः । तदुक्तमाद्यैः "जन्मतारेद्वादशधाविभक्तेयत्रचंद्रमाः । लग्नात्तावतियेराशौन्यसेदाद्यदशाधिपन् ॥ सयद्युच्चेयवानीचेतदास्याद्राजसेवकः । स्वमित्रर्क्षेसुखीशत्रुराशौनिःस्वःसमेसमः" इति ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥

अंतर्भुक्त्यंशयोरेतत् ॥ ३४ ॥

अथांतर्दशोपदशयोः संचारविशेषमाहसूत्रैः । स्वस्यात्मकारकस्य वैपम्येओजपदत्वेयथास्वंयथाराशिस्वभावंक्रमव्युत्क्रमौज्ञेयौ । ओजपदे ओजराशिश्चेत्क्रमः युग्मराशिश्चेद्व्युत्क्रमइतिसाम्येयुग्मपदत्वेविपरीतंयुग्मराशौक्रमः ओजराशौव्युत्क्रमइतिज्ञेयम्कारकेयथाओजयुग्मप

दभेदेनक्रमव्युत्क्रमतद्विपरीतत्वं तथाशनावापिवेदितव्यानीत्येकेआचार्यावदंति । स्वपदोपादानात्कारकांतदशायामुपदशायांचैवेदंबोध्यम् ॥ ३४ ॥

## शुभादशाशुभयुतेधाम्न्युच्चेवा ॥ ३८ ॥

अथदशाफलविशेषमाह । शुभयुतेधाम्निराशौसतितद्राशिदशाशुभा स्यात् उच्चग्रहयुतेराशौतदधिपेउच्चेवातद्राशिदशाशुभेत्यर्थः ॥ ३५ ॥

## अन्यथान्यथा ॥ ३६ ॥

उच्चमित्रशुभयोगलक्षणगुणाभावेसमानीचादियोगसत्त्वेऽशुभेत्यर्थः ३६

## सिद्धमन्यत् ॥ ३७ ॥

अन्यत्प्रकृतग्रंथानुक्तंसिद्धंशास्त्रांतरप्रसिद्धंग्राह्यमित्यर्थः ॥ ३७ ॥

## इति द्वितीयाध्यायस्यचतुर्थःपादः ॥ ४ ॥

इतिश्रीनीलकंठज्योतिर्विद्विरचितायांजैमिनीयसूत्रव्याख्यायांसुबोधिन्यांद्वितीयाध्यायस्यचतुर्थःपादःसमाप्तिमगात् ॥ ४ ॥

इति द्वितीयाध्यायः ॥ २ ॥

---

॥ श्रीकृष्णार्पणमस्तु ॥

पुस्तक मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास

"श्रीवेंकटेश्वर" छापाखाना–बम्बई.

श्रीः ।

# अथ तृतीयोऽध्यायः ॥ ३ ॥

## श्रीगणेशाय नमः ।

अथराजजनिताभ्यांयोगेयोगेलेयान्मेपाधिपः ॥ १ ॥ उच्चनीचस्वांशवर्तीतादृशदृष्टिश्चशुभमातृदृष्टेयादिमहाराजः ॥ २ ॥ लेयलाभयोः परकाले ॥ ३ ॥ लाभलेयाभ्यांस्थानगः ॥ ४ ॥ तत्रशुक्रचंद्रयोर्यानवंतः ॥ ५ ॥ तत्रशनिकेतुभ्यांगजतुरगाधीशः ॥ ६ ॥ शुक्रकुजकेतुपुत्रभाग्यदारेपु स्थितेपुराजानः ॥ ७ ॥ पितृलाभधनप्राणयोश्च ॥ ८ ॥ पत्नीलाभयोःसमानकालः ॥ ९ ॥ भाग्यदारयोर्ग्रहयुक्तसमानेपुसांप्रतः ॥ १० ॥ तत्रउच्चेकरसंख्याराज्ञांच ॥ ११ ॥ पितृधर्मयोर्लेयलाभयोर्गुरौचंद्रशुभदृग्योगेमंडलांतः ॥ १२ ॥ तत्रबुधगुरुदृग्योगेयुवजोवा १३ ॥ तस्मिन्नुच्चेनीचेपितृलाभयोःश्रीमंतः ॥ १४ ॥ स्वभावनाथाभ्यांशुक्रचंद्रदृग्योगयोः ॥ १५ ॥ तत्रशुभवर्गेपुश्रीमंतः ॥ १६ ॥ दारशूलयोश्चंद्रगुरौ ॥ १७ ॥ शूलेचंद्रेरिःफगुरौधनेपुशुभेपुराजानः ॥ १८ ॥ पत्नीलाभयोश्च ॥ १९ ॥ एवमंशतोदृक्काणतश्च ॥ २० ॥ लेयलाभश्चंद्रेगुरौशुभदृग्योगेमहांतः ॥ २१ ॥ लाभचंद्रेपि ॥ २२ ॥ पापयोगाभावेशुभदृग्योगिनिच ॥ २३ ॥ अत्रशुभदृग्योगेराजप्रेष्यः २४ ॥ शुभवर्जेपुत्रिकोणकेंद्रेवा ॥ २५ ॥ स्वांशयोगेराजवंशः ॥ २६ ॥ उच्चांशेतादृशदृष्टिश्चराजराजावंश्योवा ॥ २७ ॥ अशुभदृग्योगान्नचेन्नचेन्न ॥ २८ ॥ पंचमांशपदेपिसमेपुशुभेपुराजानोवा ॥ २९ ॥ स्वलेयमेपाभ्यांराजचिह्ना

नि ॥ ३० ॥ इत्युपदेशसूत्रेतृतीयेप्रथमःपादः ॥ १ ॥
यज्ञजनेशाभ्यांस्वकारकाभ्यांनिधनम् ॥१॥ निधनंलेय
लाभयोःप्राणि ॥२॥गुरौकेंद्रेमंदाराभ्यांदृष्टेशनिभोगहेतौ
कक्ष्यापवादः॥३॥रिपुरोगयोश्चंद्रे॥४॥स्वभावगैश्च ॥५॥
रोगतुंगयोर्वा ॥ ६॥ तत्रशनौप्रथमं॥७॥राहोद्वितीयं॥८॥
केतोस्तृतीयंनिधनं ॥ ९ ॥ तत्तुत्रिकोणेपु ॥ १० ॥ चरे
प्रथमं ॥ ११ ॥ स्थिरेमध्यमं ॥ १२ ॥ द्वंद्वेन्त्यं ॥ १३॥
एवंचरस्थिरद्वंद्वचराभ्यां ॥ १४ ॥ स्वपितृचंद्राः॥१५॥
तत्रशनिकक्ष्याऽन्हासः ॥१६॥ रिपुषष्टाष्टमयोश्च ॥१७॥
प्रथममध्यमयोरंत्यमध्यमयोर्वा ॥ १८ ॥ शुभदृग्योगा
न्न ॥ १९ ॥ पितृलाभेशयोरस्यैवयोगेवा ॥ २० ॥ अप्र
संगवादात्प्रामाण्यंरोगयोःप्राणिसौरदृष्टियोगाभ्यां॥२१॥
द्वारवाह्ययोरपवादः ॥ २२ ॥ द्वारेचंद्रदृग्योगान्न ॥२३॥
केवलशुभसंबंधेवाह्येच॥२४॥लेयरोगक्रूराश्रयेपि॥२५॥
रोगर्क्षत्रिकोणदशाब्दे ॥ २६ ॥ रोगनवांशदशाभ्यांनिध
नम्॥२७॥तत्रापिशनियोगे॥२८॥ मिश्रेशुभयोगान्न२९
लग्नेंद्रोर्भावेस्वलाभयोर्भावयोःक्रूरेरुद्राश्रयेपि ॥ ३०॥ न
वापवादानि ॥३१ ॥ इनशुक्राभ्यांरोगयोःप्रामाण्यंनिधनं
॥३२॥महेश्वरब्रह्मयोराद्यन्तयोः ॥ ३३ ॥ चरनवांशदशा
यांनिधनम् ॥ ३४ ॥ चित्तनाथाभ्यांरिपुरोगचित्तकर्मणि
॥३५॥ क्रूरग्रहेपुसद्योरिष्टम्॥३६॥शनिराहुचंद्रयोगेसद्यो
रिष्टम् ॥३७॥ कोणाश्रयेपुसद्योरिष्टम्॥३८॥सर्वमेवंपाप
ग्रहेपुच ३९केवलरिपुरोगचित्तनाथाभ्यां४०तत्रापिचित्त
नाथापहार ४१इत्युपदेशसूत्रतृतीयेद्वितीयःपादः ॥२ ॥

लेयलाभयोःपदम् ॥१॥ पदभावयोश्चरे ॥२॥ क्रांतराशौ कर्मणिदुष्टंमरणंकर्मणिपापेराजाभ्यांयथासतुधे ॥ ३ ॥ दिनेदिनौपुण्यं ॥४॥ तत्रकर्मादि॥५॥तत्रकर्मादि॥६॥ चराचरयोर्विपरीतकाले॥७॥ततःकोशे ॥८॥ पत्नीदृष्टमा त्रगुरुयुक्ते ॥ ९ ॥ पापदृग्योगे॥१०॥पापाणमरणे॥११॥ अत्रकेतुयुक्ते ॥ १२ ॥ दोपेणहननं ॥ १३ ॥ केतौपापदृ ष्टौवा ॥ १४ ॥ अत्रशुभयोगे ॥ १५ ॥ मलिनभावेक्रां तराशौकर्मणिदुष्टंमरणं॥१६॥क्रूराश्रयेसर्वेशूलादि।१७। राहुदृष्टेनिश्चयेन॥१८॥राहुशनिभ्यांदुष्टबलादिं ॥१९॥ तत्रप्रतिबंधः ॥ २० ॥ कुजकेतुभ्यांनित्यंच ॥ २१ ॥वा शीयोग्यफूलदे (?)॥ २२ ॥ मृत्युरोगाभ्यांराहुचंद्राभ्यां यथास्वंमृत्युः ॥ २३ ॥ अत्रभावकरादि ॥ २४ ॥ तुरग वृपवर्गे॥२५॥अत्रकुजास्फोटकादिकुंडलधरश्च॥ २६ ॥ रत्नाकरयोगे ॥ २७ ॥ कालदंडान्मरणं ॥ २८ ॥ शेपा भुजंगादि॥२९॥कीटवृपवृश्चिकांशे ॥३०॥ रोगमातृदृष्ट योर्भावेभूपकादिमृतिः॥३१॥तत्रमंदे॥३२॥विपपानादि ॥३३॥सौम्यदृग्योगाभ्यांमंडूकभेदादि॥३४॥ स्वांशत्रा ह्याद्वर्णनामभिः॥३५॥लेयान्मृत्युः।३६।चलेमृत्युः।३७। भाग्येदंडात्॥३८॥ कर्मविपभक्षात् ॥३९॥ दारेज्वरभयं ॥४०॥माताशत्रुहतः॥४१॥शनौरिपुभयं ॥४२॥लाभेकु ष्ठरोगः॥४३॥विपूचीजलरोगादिदेहे ॥४४ ॥ धनेसङ्गादो ॥४५॥नित्यदुर्मरणं ॥४६॥ तत्ररवियोगेरिपुशस्त्राग्निभयं ॥४७॥चंद्रेणकूपे॥४८॥कुजेनव्रणस्फोटादि ॥४९॥ बुधे

नवृक्षपर्वतादयः॥५०॥गुरुणास्ववैपम्येरौपावकः॥५१॥
शुक्रेणशुक्रमेहात्॥ ५२॥ शनिनाविपभक्षणादि॥५३॥
राहुकेतुभ्यांविपसर्पलोप्टबंधनादिभिः॥ ५४॥ शनिराहु
भ्यांराहुणादंडादि ॥ ५५॥ तत्रगुरुराहुभ्यामभिचारा
दि ॥ ५६॥ तत्रगुरुशनिभ्यांदृष्टेयथास्वनाशः॥ ५७॥
स्वात्रिंशांशेकीलकाफलरोगादि॥५८॥ललाटंप्रथमं॥५९
केशांद्वितीयः॥६०॥बधिरंतृतीयः॥६१॥चतुर्थोनेत्रे।६२।
सिंहादौपंचमे ॥ ६३॥ पष्ठंजिह्वाग्रे ॥ ६४॥ पूर्वपक्षेरा
हुकेतुभ्यांस्वजिह्वादिं ॥ ६५ ॥ तत्रशनिमांदिभ्यांगल
द्वादि॥६६॥तत्रकुजेशोपः॥६७॥लाभांशेमरणम्॥६८॥
तत्ररवौप्रतिबंधः ॥ ६९॥ कौंतायुधधनौरोगे ॥ ७०॥
सायकैर्धनं॥७१॥अशनिहृतकाये॥ ७२॥ मार्गैमार्गैरिपू
णांवैरिवर्गश्चस्ववैपम्येरिपुः ॥७३॥क्रूराश्रयबलेरिपुहतः
॥७४॥शन्यारफणिवर्गाद्यैः।७५॥भावेशाक्रांतराशिस्थः
॥७६॥रवियुक्तदृष्टेप्राथमिकः ॥७७॥ तत्रचंद्रान्निश्चयेना
कुजेनज्ञातिभ्यः॥७८॥तत्रशनौमृत्युवादाग्निकरणश्च७९
स्वांशेपि॥८०॥अन्यतरांशश्च ॥८१॥नीचाश्रयेविपरीतं
॥८२॥तत्रशनौरूपे॥८३॥विपभक्षणादि॥८४॥तनुतनौ
दंडहरं॥८५॥तत्रभावविशेपः ॥८६॥(?)अवशवनिधनं
॥८७॥मातापित्रोर्द्वितीयः॥८८॥ज्ञातिवर्गभ्रात्रादिस्तृती
यः ॥ ८९॥ कलत्रंचतुर्थं ॥ ९०॥ पुत्रंपंचमं ॥ ९१॥
शत्रुवर्गेपष्ठं ॥ ९२॥ तत्रपापानांसन्निकृष्टं॥ ९३॥ ज
नने ॥ ९४॥ लाभेस्त्रियाविपत्तिः॥ ९५॥ भावेस्वकर्म
चित्तांशात्स्वांशेनिधनेनिधनं ॥ ९६॥ स्वभूचात्पतनं

॥९७॥ शूलेमृतिः ॥९८॥ धनेनज्ञानवान्मरणं ॥९९ ॥
नयनेग्रहणीरोगादि॥१००॥शूलेशत्रुमरणं ॥१०१॥उच्चे
ग्रहभातिः ॥२॥तत्ररविशनिभ्यामोजेकूटराशौयुग्मेनिर्ण
यः॥३॥धनसुखाभ्यांपादरोगः ॥४॥ तनुविक्रमाभ्यामंगु
लिरोगः॥५॥तत्रकेतुनाअंगहीनश्च ॥६॥तत्रपापदृष्टेपाद
हीनः॥७॥अथवलानि॥८॥प्राणिनिशुभयुक्ते ॥९॥राशि
वलभागे॥१०॥चरपर्यायेन ॥ ११ ॥ शुभदृष्टेपादहीनः
॥१२॥शुभदृष्टित्रिशूले॥१३॥अंशत्रिशूलेवा।१४॥भाव
कोणाभ्यांनिसर्गतः॥१५॥आश्रयतोवलिष्ठः ॥ १६ ॥ या
दिभेराशौपितृलाभयोः॥१७॥स्वकर्मभेदेन ॥१८॥मृतिं
त्वेपरिपाताभ्यांजघन्यायुपितत्रपरिपाके ॥ १९ ॥ एवं
निधनंमातापित्रोः॥२०॥भूम्यंशश्चनिवृत्तिकारकः २१॥
नायांतसंज्ञाःस्युः ॥ २२ ॥ कर्मस्थाचरपर्याये ॥ २३ ॥
भाग्यदारयोःस्थिरोभयोः ॥२४॥ भाग्यकारकाभ्यांमंग
लपदं॥२५॥मृत्युमृत्युपि॥२६॥अन्यैरन्यथा॥२७॥भूत
मन्यत् ॥२८॥ इत्युपदेशेआयुर्दायापवादेतृतीयेतृतीयः
पादः॥३॥पुनःपदःपदे॥१॥उपग्रहयुक्तेश्रीमंतः॥२॥ आ
धानपितुर्लयमेषं॥३॥सूर्यात्कर्मणिपित्रोः ॥४॥ पुनःपद
उत्तरयोः॥५॥पदाभ्यांभृगुसौम्यव्यतिरिक्ते ॥६॥दिनकरे
लाभेयोरेनिसंज्ञाःस्युः (?)॥७॥ प्रियानुपपत्तिः ॥८॥ तत्र
पाकर्म॥९॥स्वकर्मव्याप्रश्च॥१०॥दिनकरत्रिकोणेलाभ
पदेगर्भसंप्लवे ॥११॥तत्रगर्भपाते॥१२॥रविकेत्वंशेशुक्र
शोणितौ ॥ १३ ॥ गुरुत्रिशांशे॥१४॥चंद्रदृग्योगे॥१५॥
सुकलिपुवयोः॥१६॥शुक्ररेतो॥१७॥वर्णपरिपाकं १८॥

नवृक्षपर्वतादयः॥५०॥गुरुणास्ववैषम्येरौपावकः॥५१॥
शुक्रेणशुक्रमेहात्॥ ५२ ॥ शनिनाविषभक्षणादि॥५३॥
राहुकेतुभ्यांविषसर्पलोष्टबंधनादिभिः॥ ५४ ॥ शनिराहु
भ्यांराहुणादंडादि ॥ ५५ ॥ तत्रगुरुराहुभ्यामभिचारा
दि ॥ ५६ ॥ तत्रगुरुशनिभ्यांदृष्टेयथास्वनाशः ॥ ५७॥
स्वात्रिंशांशेकौलकाफलरोगादि॥५८॥ललाटंप्रथमं॥५९
केशंद्वितीयः॥६०॥बधिरंतृतीयः॥६१॥चतुर्थोनेत्रे।६२।
सिंहादौपंचमे ॥ ६३ ॥ षष्ठंजिह्वाग्रे ॥ ६४ ॥ पूर्वपक्षेरा
हुकेतुभ्यांस्वजिह्वादिं ॥ ६५ ॥ तत्रशनिमांदिभ्यांगल
द्वादि॥६६॥तत्रकुजेशोपः॥६७॥लाभांशेमरणम्॥६८॥
तत्ररवौप्रतिबंधः ॥ ६९ ॥ कौंतायुधधनौरोगे. ॥ ७० ॥
सायकैर्धनं॥७१॥अशनिहतकाये॥ ७२॥ मार्गेमार्गेरिपू
णांवैरिवर्गश्चस्ववैषम्येरिपुः ॥७३॥क्रूराश्रयवलेरिपुहतः
॥७४॥शन्यारफणिवर्गाद्यैः ।७५॥भावेशाक्रांतराशिस्थः
॥७६॥रवियुक्तदृष्टेप्राथमिकः ॥७७॥ तत्रचंद्राग्निश्चयेना
कुजेनज्ञातिभ्यः॥७८॥तत्रशनौमृत्युवादाग्निकरणश्च७९
स्वांशेपि॥८०॥अन्यतरांशश्च ॥८१॥नीचाश्रयेविपरीतं
॥८२॥तत्रशनौरूपे॥८३॥विषभक्षणादि॥८४॥तनुतनौ
दंडहरं॥८५॥तत्रभावविशेषः ॥८६॥(?)अवशवानिधनं
॥८७॥मातापित्रोर्द्वितीयः॥८८॥ज्ञातिवर्गभ्रात्रादिस्तृती
यः ॥ ८९ ॥ कलत्रंचतुर्थं ॥ ९० ॥ पुत्रंपंचमं ॥ ९१ ॥
शत्रुवर्गेषष्ठं ॥ ९२ ॥ तत्रपापानांसन्निकृष्टं ॥ ९३ ॥ ल
ग्ने ॥ ९४ ॥ लाभेस्त्रियाविपत्तिः ॥ ९५ ॥ भावेस्वकर्म
चित्तांशात्स्वांशेनिधनेनिधनं ॥ ९६ ॥ स्वभूच्चात्पतनं

॥९७॥ शूलेमृतिः ॥९८॥ धनेनज्ञानवान्मरणं ॥९९ ॥
नयनेग्रहणीरोगादि॥१००॥शूलेशत्रुमरणं ॥१०१॥उच्चे
ग्रहभातिः ॥२॥तत्ररविशनिभ्यामोजेकूटराशौयुग्मेनिर्ण
यः॥३॥धनमुखाभ्यांपादरोगः ॥४॥ तनुविक्रमाभ्यामंगु
लिरोगः॥५॥तत्रकेतुनाअंगहीनश्च ॥६॥तत्रपापदृष्टेपाद
हीनः॥७॥अथवलानि॥८॥प्राणिनिशुभयुक्ते ॥९॥राशि
वलभागे॥१०॥चरपर्यायेन ॥ ११ ॥ शुभदृष्टेपादहीनः
॥१२॥शुभदृष्टित्रिशूले॥१३॥अंशत्रिशूलेवा॥१४॥भाव
कोणाभ्यांनिसर्गतः॥१५॥आश्रयतोवलिष्ठः ॥ १६ ॥ या
दिर्भराशौपितृलाभयोः॥१७॥स्वकर्मभेदेन ॥१८॥मूर्ति
त्वेपरिपाताभ्यांजवन्यायुपितत्रपरिपाके ॥ १९ ॥ एवं
निधनंमातापित्रोः॥२०॥भूम्यंशश्चनिवृत्तिकारकः २१॥
नायांतसंज्ञाःस्युः ॥ २२ ॥ कर्मस्थाचरपर्याये ॥ २३ ॥
भाग्यदारयोःस्थिरोभयोः ॥२४॥ भाग्यकारकाभ्यामंग
लपदं॥२५॥मृत्युमृत्युपि॥२६॥अन्यैरन्यथा॥२७॥भूत
मन्यत् ॥२८॥ इत्युपदेशेआयुर्दायापवादेतृतीयेतृतीयः
पादः॥३॥पुनःपदःपदे॥१॥उपग्रहयुक्तेश्रीमंतः॥२॥ आ
धानपितुर्लेयमेषं॥३॥सूर्यात्कर्मणिपित्रोः ॥४॥ पुनःपद
उत्तरयोः॥५॥पदाभ्यांभृगुसौम्यव्यतिरिक्ते॥६॥दिनकरे
लाभयोरेनिसंज्ञाःस्युः (?) ॥७॥ प्रियानुपपत्तिः ॥८॥ तत्र
पाकर्म॥९॥स्वकर्मव्याघ्रश्च॥१०॥दिनकरत्रिकोणेलाभ
पदेगर्भसंप्लवे ॥११॥तत्रगर्भपाते॥१२॥रविकेत्वंशेशुक्र
शोणितौ ॥ १३ ॥ गुरुत्रिशांशे॥१४॥चंद्रदृग्योगे॥१५॥
सुकलिप्लुवयोः॥१६॥शुक्ररेतौ॥१७॥वर्णपरिपाकं १८॥

यस्याधानंचंद्रदृग्योगे॥१९॥यथाआधानपरिपाकेचचंद्र
बुधभृगुयोगाभ्यामाधानपरिमिते॥२०॥ सुवर्णारणिसंयो
गे॥२१॥शनिचंद्राभ्यांनाभेरधः॥२२॥गर्भवायुपरिवृन्ते
॥२३॥तत्रकेतुनापुष्करस्त्रजाख्यादिकेत्वंतम्॥२४॥ग्र
हानतिरेतः॥२५॥ अन्ययोनिगर्भेष्वजः॥२६॥ राहुचंद्रा
भ्यांवीरतमः॥२७॥ अवीरोपपत्तिःकर्मणिपाकेएवंगर्भनि
र्णयं॥२८॥स्थानाद्यैःस्वांशगश्च॥२९॥यथाधर्मशीले३०
स्वांशग्रहैर्नीचउच्चयोः॥३१॥क्रियमेपलग्नेपु॥३२॥ अथ
रविप्राणाः ॥३३ ॥ नैसर्गिकबलेष्वभियोगशूलइहजायते
॥३४॥पुंपुमान्॥३५॥बाणइति॥३६॥अत्रोदाहारः३७॥
केतुशनिभ्यांरक्तप्रदरः ॥ ३८॥ शनौपातयोगेकृष्णवर्णः
॥३९॥शनिशुक्राभ्यांश्यामवर्णः॥४०॥ गुरुशशिभ्यांगौ
रवर्णः ॥४१॥ शनिबुधाभ्यांनीलवर्णः ॥४२॥ शनिकुजा
भ्यांरक्तसुवर्णः॥४३॥शनिचंद्राभ्यांश्वेतवर्णः॥४४॥स्वां
शवशाद्गौरनीलादीनि ॥४५॥ तथाप्युदाहरंति ॥ ४६॥
रेतःसिंचन्प्रजाःप्रजनयमितिविज्ञायते ॥ ४७ ॥ चरेपाप
दृग्योगेपुत्रनाशः॥ ४८ ॥ शुक्रदृग्योगेपुत्रलाभः॥४९॥
पापशुभदृग्योगाभ्यांप्रथमवर्णक्रमेणहासावृत्तिः॥५०॥
यन्नवभागेनवांशाभ्यांसंख्यावृद्धिः॥५१॥ बीजयुगबलयो
बिंदुपतनकालेयमलाभ्यामूर्ध्वतःशुभपापयोश्चरस्थिर
योरर्द्धे तोतादिकनेत्रविकृतोष्ठनासिकमुखकर्णकेशदंतप
टलपादांगहीनकुब्जबधिरमूलांगोपांगसुशिरकेशावर्तच
क्रबीजविपर्यासकुनखीवृपोन्नतवृहन्नाभिनेत्रःपार्श्वदृष्टयो
रंधकुब्जवामनसत्वस्वरनीचस्वरहीनस्वरेत्यादिष्वपि

पितृमात्रोर्बलानि॥८२॥एवमृक्षाणांबलानि॥८३॥स्वपि
तृभाग्ययोःपरिपाककाले ॥८४॥इतितृतीयाध्यायेगर्भव
र्णननिर्णयोनामचतुर्थःपादः ॥४॥ समाप्तश्चाध्यायः॥३॥

## अथ चतुर्थोऽध्यायः ॥ ४ ॥

पितृदिनेशयोःप्राणीदेहः ॥१॥ लाभचंद्रयोः प्राणिहृदयं
॥ २ ॥ लेयचंद्रयोः प्राणिशिरः ॥ ३ ॥ भाग्यचंद्रयोः
प्राणिमुखं ॥ ४ ॥ कामचंद्रयोःप्राणीकंठः ॥ ५ ॥ दारचं
द्रयोः प्राणिबाहुः ॥ ६ ॥ मातृचंद्रयोः प्राण्युदरं ॥ ७ ॥
ततश्चंद्रयोःप्राणिजघनं॥८॥लाभचंद्रयोः प्राणीपृष्ठः ९॥
दिनचंद्रयोःप्राणीगुदः॥१०॥धनचंद्रयोःप्राणीपादौ११॥
रिःफचंद्रयोःप्राणीनेत्रे ॥१२॥ शूलचंद्रयोःकर्णयोः प्राणी
कर्णौ॥१३॥रौप्यचंद्रयोःप्राणीनासिके ॥१४ ॥ एवंद्वाद
शभावानां ॥१५॥प्राणिबलानि ॥१६॥ अप्राण्यपिपाप
दृष्टः॥१७॥प्राणिनिशुभदृष्टे॥१८॥तत्तद्भावेजन्मसूचितं
॥१९॥आजन्मादिर्वपुःपु॥२०॥पित्रोःप्राक्काले ॥२१॥
शरमेवमातापितरौजनयतः॥२२॥अशोणितोक्लीवश्च २३
एवंभावविचारः॥२४॥ अंकुशाभ्यांतु २५ वर्णभेदाश्रये
ण॥२६॥जीवेंदुबुधादयः ॥२७॥ब्राह्मणश्चरविःकुजःक्षत्रः
॥२८॥शनिःशूद्रश्च॥२९॥राहुर्दूरजातिः ॥३०॥ केतुश्चां
डालः॥३१॥वर्णभेदेनपुत्रलाभाभ्यांमृगवर्णौ॥३२॥आसु
रत्रयंच ३३यदिपापबाहुल्यंतत्ररमणीजालः ३४ सुखके
शानि३५पडानि॥३६॥शनिराहुकेतुजेपुवैपरीत्यम् ३७
तालुतेफोफस्यशेवलेमित्रावरुणबले (?) ॥३८॥ मृत्युना
कैवल्यम्॥३९॥शृंगारेलाटः॥४०॥प्राणपाणौबले।४१॥

मृत्युविचित्ते॥४२॥माधुरीकन्ये॥४३॥मांजिष्ठेमृगे४४॥
मानुपिकुरूपः॥४५॥मरणेमाने।४६॥मायामालिंगे४७।
शुभेनकर्मणिपितृनियोजयोजयेत् ॥४८॥पापेमातरिमि
श्रेभ्रातरः॥४९॥शुभपापमिश्रेविरूपः॥५०॥ मातुनाशो
कः ॥५१॥चंद्रागुरुदृग्योगानिश्चयेनास्वमूर्तिंपुरुपेकालरू
पः॥५२॥तिर्यग्दृष्टौप्रायोनिर्वृत्तिकारकः ॥५३॥ शूलेश
योर्दारयोशतोर्वंगुरुदृष्टेच ॥५४ ॥ इतिउपदेशेचतुर्थेप्रथ
मःपादः॥१॥वलपदयोः प्राणीमारकः ॥१॥ रुद्राश्रयेपि
॥२॥भावेपिवलदृष्टांतः॥३॥ओजयुग्मयोः प्राणिवलं४॥
अभिपश्यतिभावानि ॥ ५ ॥ शुभान्यतराणिच ॥ ६ ॥
प्रत्यक्शूलेनित्यविक्रमेवुधशुक्राभ्यांदंतोष्टपटलपार्श्व
पाः ॥ ७ ॥ करकर्णाभ्यांमृत्युचित्तयोर्विपरीतं ॥ ८ ॥
लग्नेपित्रकभावेपिकामनाथयोरैक्येयमलः ॥ ९ ॥ काम
नाथप्राणिनिशुभं॥१०॥स्वनाथप्राणिनिच्युतयोः ११॥
भावयोःप्राणिनिकक्ष्याऱ्हासः ॥ १२ ॥ शुभयोगवलाच्चै
वं ॥ १३ ॥ मिश्रेसमाः प्राणिहीनेविपरीतं ॥ १४ ॥ सं
मेनित्यं ॥ १५ ॥ भाग्ययोर्वलं ॥ १६ ॥ गुरुचंद्रयोधर्म
धनैक्येकर्मवले ॥ १७ ॥ मेपेविपरीतं ॥ १८ ॥ ततःप्रा
णाः स्वपितृयोगः ॥ १९ ॥ शुद्धस्वकाले ॥ २० ॥ अनु
कूललेयेतुंगनीचे ॥ २१ ॥ भाववलाभ्यांतु ॥ २२ ॥ कें
द्रत्रिकोणोपचयेपुराहुकुजौजानुहावीरिकेवलराहौतत्रानि
धनं ॥ २३ ॥ भौमदृग्योगान्निश्चयेन ॥ २४ ॥ तत्रशनौ
गुरुदृग्योगेसेतुयोग्यं स्वत्रिकोणराशिपु ॥ २५ ॥ पदेचा
पदभावेस्वामिनइत्थं ॥ २६ ॥ ऱ्हस्वफलादिशुभवर्गेपु

तिशेषास्त्वन्ये॥२७॥मूर्तिरूपंच॥२८॥स्वकारकव्यति रिक्तेषु॥२९॥ भाववलेचंद्राश्रयेपि ॥३०॥ दारेमित्रस्व पितृभ्यां॥३१॥भावशूलदृष्ट्याच ३२ पितृनाथदृष्ट्या रोगः ॥३३॥ पुत्रनाथदृष्ट्यादरिद्राः ॥ ३४ ॥ शूलनाथ दृष्ट्याव्ययशीलः॥३५॥रिपुनाथदृष्ट्याकर्म॥३६॥धन नाथदृष्ट्यानिरोगीच ॥३७॥ माननाथदृष्ट्याप्रवलः३८ दारेशदृष्ट्यासुखिनः॥३९॥कामेशदृष्ट्याप्रध्वंसः॥४०॥ भाग्यनाथदृष्ट्यासुरूपः॥४१॥सर्वदृष्ट्याप्रवलः॥ ४२॥ दारभाग्येच॥४३॥वर्णपदाश्रयकोणेषु॥४४॥शुक्रेच४५ कोणयोःशुभेषुमित्रप्रागपवर्गे ॥४६॥ केंद्रत्रिकोणयोः शु भेकालवलानि॥४७॥इत्युपदेशसूत्रेचतुर्थध्यायेद्वितीयः पादः ॥२॥बुधशुक्रयोर्युग्मेस्त्रीजननं॥१॥कालनिर्णयादि ॥२॥अंशभेदेनलिप्तविलिप्ताः॥३॥कालकाः ॥ ४ ॥ अनु लिप्ताश्च ॥५॥ द्विनाद्विचतुःसंख्यादि॥६॥ नवभागशेषे ॥७॥ आद्यंशके ॥८॥ ग्रहक्रमेणवर्णे ॥ ९॥ पुमान्पुंप्रजः ॥१०॥ अन्येस्त्रियः ॥११॥क्लीवेपूर्वापरौ ॥१२॥ एवंवर्ण संज्ञाःस्युः॥१३॥नीचेदारांशकः॥१४॥आद्यादिस्ववर्णः ॥१५॥मित्रभेदाभ्यांचरपर्यायेणसंज्ञाःस्युः॥१६॥धात्वा दिरूपवर्णेन॥१७॥ स्वांशगैश्चवलः॥१८॥रविकुजौरक्तौ ॥१९॥बुधशुक्रौश्यामौ॥२०॥कृष्णेतराःस्युः ॥२१॥त्रि त्रिभागेचरस्थिरोभयपर्याये ॥ २२ ॥ घटिकापष्टिनिर्ण ये ॥ २३ ॥ अंशस्यैकस्यपंचघटिकाः ॥ २४ ॥ एवंद्वा दशपंचस्युः विघटिकादिक्रमेण॥२५॥ओजेपुरुषः॥२६ युग्मेस्त्रियः ॥ २७ ॥ ओजयुग्मयोःस्त्रीपुरुषौ ॥ २८ ॥

यथामातरिवर्णे ॥ २९ ॥ मात्राप्रसवकालमुखेन ॥ ३० ॥
राह्विदुभ्यांस्त्रीजननं ॥ ३१ ॥ पुरुषतराः ॥ ३२ ॥ श
न्याराभ्यांपुरुषः ॥ ३३ ॥ शनिबुधाभ्यांस्त्रियः ॥ ३४ ॥
शनिचंद्राभ्यांकुजः॥३५॥शनिशुक्राभ्यांरूपवत्या॥३६
शनिकेत्वोर्जारिणी॥३७॥तत्रबुधांशेवहिर्जारिणी॥३८॥
चंद्रशुक्रौकामीप्रवीणतमश्च ॥ ३९ ॥ अंशभेदेन॥४०॥
बुधशुक्राभ्यांकामीविरागतः॥४१॥तत्रकेत्वंशे ॥ ४२ ॥
गोपमन्यतरः ॥ ४३ ॥ केत्वंशेबुधचंद्रदृष्टेसवर्वर्णाश्रयेषु
संचरितः ॥ ४४ ॥ पापदृष्टेपुंश्चली ॥ ४५ ॥ सप्तमाष्टम
योः पापवल्येविघाव(?)॥४६॥तत्राष्टमेकुजेकेतुपु४७॥
दृग्योगाभ्यांभर्तृहंत्री ॥ ४८ ॥ एकांशेन ॥ ४९ ॥ ओज
युग्ममार्गया ॥ ५० ॥ नीचेविपर्ययः ॥ ५१ ॥ षड्वर्गादौ
सन्निपातहनने ॥ ५२ ॥ मूर्तौरूपं ॥ ५३ ॥ भाग्यांशगे
श्चंद्रबाहुल्येबुधशुक्राभ्यांसुमतिः॥५४॥तत्रकेतुनाकेत्वं
शेदुर्गंधी॥५५॥ रविदृष्टेदंतवक्री॥५६॥कुजदृष्टेक्रोधक
री ॥ ५७ ॥ इतरग्रहदृग्योगः ॥ ५८ ॥ सौम्यश्च॥५९॥
पापेपापबाहुल्या ॥ ६० ॥ शुभेगुणवती ॥ ६१ ॥ मिश्रे
समाः ॥ ६२ ॥ एवमष्टमःसप्तमार्द्धहरितः ॥ ६३ ॥ त्रि
कोणत्रिषडायेषु ॥ ६४ ॥ नीचेविपर्ययः ॥ ६५ ॥ दिन
भाग्ययोरानुकूल्ये ॥ ६६ ॥ शुभेतरमिश्रतरौच ॥६७॥
चक्षुर्वर्णभेदेननित्याश्च ॥ ६८ ॥ यत्नेअंशकतः ॥६९॥
राज्येनीचे ॥७०॥ धनेकामी ॥७१॥ धर्मेमोक्षी ॥७२॥
धनेपापी ॥ ७३ ॥ तत्ररव्यंशेबालविधवा ॥ ७४ ॥ रवि
त्रिकोणेषुच ॥ ७५ ॥ चंद्रेकामिनी ॥ ७६ ॥ चंद्रत्रिको

णेषुचकुजकुरूपिक्रोधी ॥७७॥ कुजत्रिकोणेषुच॥७८॥ बुधेवंध्या ॥ ७९ ॥ बुधेत्रिकोणेषुचागुरौपतिभक्तिपराय णी ॥ ८० ॥ गुरुत्रिकोणेपुच ॥ ८१ ॥ शुक्रेसर्वसौभाग्य कारिणी ॥ ८२ ॥ शुक्रत्रिकोणेषुच ॥ ८३ ॥ शनौका मिनीचपुरुपः॥८४॥ शनित्रिकोणेपुच ॥ ८५ ॥ राहुस र्वकर्मात्मकेपु ॥ राहुत्रिकोणेपुच ॥ ८६ ॥ केतौचंडालि तत्समानवर्ती ॥ ८७ ॥ तत्रिकोणेषुच ॥ ८८ एवंवर्णसं ज्ञाःस्युः ॥ ८९ ॥ चक्षुर्हीनं ॥ ९० ॥ वर्णात्रिंशांशेआद्या पहारे ॥ ९१ ॥ पापत्रिकोणेपुच ॥ ९२ ॥ यथास्वंनीचे पुच ॥ ९३॥ अंशग्रहबलानां ॥ ९४ ॥ रविशुक्राभ्यां प्रथमं ॥९५॥ रविचंद्राभ्यांद्वितीयं ॥९६॥ रविकुजाभ्यां तृतीयं ॥९७॥ रविबुधाभ्यांचतुर्थं ॥ ९८ ॥रविराहुभ्यां सप्तमं ॥९९॥ रविकेतुभ्यामष्टमं ॥ १०० ॥ एवंसर्वरन्ध्र भाग्ययोर्वर्जयेत्॥१०१॥लाभेचतत्रलाभयोः ॥२॥ शुभे नदोपः॥३॥शुभपापयोर्नक्वचित ॥४॥ रंध्रापवादेसौम्य त्रिकोणेमृगवर्गादि॥५॥स्वत्रिंशांशःस्वनीचभवने ॥६॥ यथामृगतौल्यादि ॥७॥आद्यंशभेदेपु॥८॥राहुकेतुभ्यां प्रबंधः॥९॥वर्गोत्तमकाले ॥१०॥ प्राणीबलानि ॥ ११ ॥ नवत्रिपडाययोरंशः॥१२॥सप्ताष्टगुणचेष्टिताः ॥१३॥ गु भागेनकर्तव्यं॥१४॥ लक्षलक्ष्यापवादयोः॥१५।क्रमात्क्रू रेशुभाभ्यांचव्युत्क्रमादुभयाययोः॥१६॥रंध्रसप्तमयोरेत त्।१७॥बलसचारितेध्रुवाः ।१८॥एतद्योगविहीनस्तुनिश्चि त्यःस्त्रीजातके।१९।इतिगुरुणाभ्यांवर्णः॥२०।स्वापितृवर्ण श्च॥२१॥इत्युपदेशसूत्रेचतुर्थाध्याये तृतीयः पादः॥३॥

गुणेषुगुणरमणी ॥१॥ केंद्रत्रिकोणेषुशुभवर्गेषु ॥२॥
कारमंदफलयोः पुमांश्च ॥ ३ ॥ चंद्रबुधाभ्यांस्त्रीच॥४
हग्योगाभ्यामपि ॥ ५ ॥ यथानिर्हरणं ॥ ६ ॥ रोगेपापे
धवीपापदृग्योगानिश्चयेन ॥ ७ ॥ उच्चेविलंबात् ॥ ८
नीचेक्षिप्रं ॥ ९ ॥ मिश्रेमिश्रात् ॥ १० ॥ चंद्रकुजहा
निश्चयेन ॥ ११ ॥आद्याआत्मजस्त्री ॥ १२ ॥ कार्ये
पेकोणेवा ॥ १३ ॥ पापदृग्योगकालेवियोनिसंज्ञायां
धित्वादिति ॥ १४ ॥ धात्वादिवर्णकाले ॥ १५ ॥ भा
परिवेधनेन ॥१६॥ उच्चेस्वांशवर्गः ॥१७॥ अर्धांशेपश्व
दियोनिसंबंधः॥१८॥मध्येमृगाः ॥१९॥ अंत्येकीटका
यः॥२०॥एवमुभौशुभलोके॥२१॥ रविशुक्राभ्यांपाप
वै॥२२॥अन्यैरन्यथा॥२३॥अत्रशुभः केतुः ॥२४॥ प
पदृग्योगान्न॥२५॥रविराहुशुक्राः॥२६॥गुरुश्चैककाला
ग्योगमिति॥२७॥यथाचंद्रम्॥२८॥तत्रगुरुवर्गेस्वाम्यंइ
च॥२९॥स्वेशभूमित्रनीचांशकश्च॥३०॥पूर्णेंदुराहारांत
रालाश्च॥३१॥शुभवर्गेशुभदृष्टियुतः ॥३२॥अंशेमित्रभे
दात्॥३३॥स्वानंदतुल्यैवा॥३४॥वर्गेनवांशश्च ॥३५॥
तत्रज्ञानाज्ञानेषु॥३६॥पुत्रमणिरमणी ॥ ३७ ॥ बुधके
तुर्वा ॥ ३८॥शुभचंद्राभ्यां॥३९॥स्वलग्ननाथाश्च ॥४०॥

इत्युपदेशसूत्रेवियोनिभेदोनामचतुर्थाध्यायस्यचतुर्थः पादः॥४॥

इति चतुर्थाध्यायः ॥ ४ ॥

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास
"श्रीवेंकटेश्वर" छापखाना-मुंबई.